...धानसभा प्रत्याशी एक वोट कांग्रेस, ...माजवादी जनता दल के लिए मांग रहे ...एक वोट भाजपा, एक वोट कांग्रेस के ...हे हैं। भितरघात भी चुनाव परिणाम ...त कर सकता है।

...तिरिक्त राजीव गांधी की रिक्तता भी ...याशियों को नुकसान पहुंचायेगी। कई ... क्षेत्र में कांग्रेस जहां मुख्य लड़ाई में ...व नम्बर तीन पर पहुंच गयी है। ... मतदाता भ्रमित है कि पार्टी को ...त्व कौन देगा या फिर कांग्रेस टूटेगी। ... कांग्रेस के प्रति जनता में कोई ...की लहर नहीं है। हां, राजीव गांधी ...का दुःख सभी को है। जैसी की चर्चा है ... गांधी को चुनाव सभा में घुमाकर ... लहर पैदा की जाये और उसका लाभ ...ये। यदि प्रियंका कांग्रेमी प्रत्याशियों के ...ट मांगने के लिए राजी हो गयी और ...ी तो उसमे महानुभूति लहर उठेगी जो ...रणामों को प्रभावित कर सकती है।

## टोंगो सरकार ... तंत्र समर्थकों की मांगे मानी

आबिदजान (साइवरी कोस्ट), १३ जून (ए.पी.)। टोंगो की सरकार ने लोकतंत्र समर्थक प्रदर्शनकारियों की मांगे मान ली हैं। और, नेशनल कांफ्रेंस बना कर स्वतंत्र चुनाव करवाने का निर्णय लिया है। जिससे टोंगो में २४ साल से चला आ रहा सैनिक शासन भी खत्म हो जायेगा।

टोंगो की सरकार और विपक्षी पार्टियों ने यह सूचना कल यहां फ्रांसीसी समाचार एजेंसी (ए.एफ.पी.) को दी।

यहां पहुंची खबरों में बताया गया है कि टोंगो की राजधानी लोम में लोग अपनी जीत और जनरल नासिंग्बे इयादेमा के पतन पर खुशियां मनाते हुये सड़कों पर नांच गा रहे हैं।

भाजपा का मारा ...

पुराण ...

जून [द्वितीय] '91
पृष्ठ 84

भूषणसार:
प्रकाश:
16.4
(२१४)

# दामों में छूट, सुविधाएँ बेमिसाल
# कूपन काटकर भेजें, फिर देखें

हाँ मैं इंटरकार्ड का सदस्य बनना चाहता हूँ। कृपया मेरा मुफ्त उपहार भिजवा दें। मेरा व्यक्तिगत विवरण
नामः

की विद्युत आपूर्ति बाधित रही। इस दौरान नगर
हयोग एवं धैर्य के लिए मैं उत्तर प्रदेश राज्य विद्युत
ारी हूं एवं आशा करता हूं कि भविष्य में इस प्रकार
े वाले विद्युत व्यवधानों में भी इसी प्रकार सहयोग

(एस.पी. निगम)
अधीक्षण अभियन्ता
विद्युत प्रेषण मण्डल
उत्तर प्रदेश राज्य विद्युत परिषद, इलाहाबाद

.१२.६.९१

## सूचना

किया जाता है कि अकस्मात अत्यधिक वर्षा के
मने के मैदान में होने वाली मतगणना का स्थान
, मऊ में कर दिया गया है मतगणना दिनांक १६ जून
सार की जायगी।
एवं उसके अन्तर्गत आने वाले विधानसभा क्षेत्र २०७

# उ.प्र.की २० सीटों पर पु[...]
# प्रतिद्वंद्वी फिर आमने सा[...]

लखनऊ, १३ जून (वा.)। उत्तर प्रदेश में [...] जून को जिन ४३ संसदीय क्षेत्रों में मतदान [...] उनमें से बीस क्षेत्रों में पुराने प्रतिद्वंद्वी [...] आमने सामने हैं।

प्रदेश में दूसरे और अंतिम चरण [...] लिया रहे चुनाव में प्रधानमंत्री चन्द्रशेखर हैं जहां समेत प्रदेश के तीन निर्वाचन [...] एक बार लगातार तीसरी बार पुराने [...] फिर से आमने-सामने हैं। [...] श्री चन्द्रशेखर

बलिया संसदीय क्षेत्र में [...] चौधरी के बीच और कांग्रेस (इ) के श्री [...] ४ के आम चुनाव फिर से मुकाबला हो [...] री से लगभग ५४ में श्री चन्द्रशेखर [...] लेकिन १९८९ में हजार मतों से [...] रीब ९१ हजार मतों से उन्होंने श्री चौ [...] का बदला ले लिया था। हराकर [...] से रामपुर रियासत के

श्रीमती शांति देवी को करीब [...] पराजित किया था।

शाहजहांपुर क्षेत्र में [...] सत्यपाल सिंह यादव तथा कां[...] जितेन्द्र प्रसाद के बीच फिर मुका[...] यादव ने गत चुनाव में श्री प्रसाद [...] हजार मतों से पराजित किया थ[...]

# 'सिंघल [...]
# घोलना [...]

(जागरण ब्यूरो)

लखनऊ, १३ जून। समाजवादी [...]

मारभ्यन्ते पचादयस्तत्प्रधानं फलं तेषां नु लाभादिप्रयोजनमिति वाक्यपद
याच्च, फलपदस्य लोके प्रवृत्त्युद्देशमुख्यफले प्रसिद्धिस्तादृशस्य धातुवाच्यत
तण्डुलं पचतीत्यत्र तण्डुलादेरुक्तफलाश्रयत्वाभावात् कर्मत्वानुपपत्तिर
आह—फलं विक्लित्यादीति, फलत्वञ्च कर्तृप्रत्ययसमभिव्याहारे सति धातु
शिष्टत्वम् ( वै० स्वार्थजन्यतावत्त्व, स्वार्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वै
दुभयसम्बन्धेनेति, फलव्यापारयोरितिद्विवचननिर्देशेन फले व्यापारे च पृथ
धातुशक्तिरिति ग्रन्थकारतात्पर्यम्, अन्ये तु फलावच्छिन्ने व्यापारे, व्याप
वच्छिन्ने फले च शक्तिरिति वदन्ति ।) व्यापारत्वञ्च न तावत् फलप्रयोज
क्रियात्वम्, आत्माश्रयात् । नापि त [illegible] जनकत्वम्, अधि
यणादिदशायां पचतीति प्रयोगा [illegible] न्यथासिद्ध
विक्लित्त्यजनकत्वादत आह, व्यापारस्तु [illegible] समभ
व्याहाराप्रयोज्यसाध्यत्वप्रकारकप्रतीतिविषयत्व [illegible]
ति [illegible] साध्यत्वेनाऽभिधी [illegible]

साध्यत्वेनाऽभिधीयमाना क्रिया ।

भूषणकारमते तु स्वावच्छेदकानुपूर्वीमत्त्व, स्वभिन्नबोधजनकतावच्छेदका-नुपूर्वीमत्त्वोभयसम्बन्धेन बोधजनकताविशिष्टत्वरूपेति,) अतएव पूर्वापरीभूत-क्षणनश्वरक्रमिकव्यापाराणां मेलनाऽसंभवात् तदात्मकक्रियाया नानात्वेऽपि समूहगतैकत्वमादाय एका क्रियेति प्रशंसायामिति सूत्रस्थभाष्योक्तिरपि संग-च्छते । तदुक्तं वाक्यपदीये— गुणभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या कल्पिताऽभेदः क्रियेति व्यपदिश्यते इति दिक् ।

प्र०७— मतान्तरनिराकरणपूर्वकं कर्तृकर्मणोराख्यातार्थत्वं सप्र-माणमुपपाद्यताम् ।

उ०—ननु लक्षणया, आक्षेपात् , समभिव्याहृतदेवदत्तादिप्रथमान्तप-द्वा फलाश्रयव्यापाराश्रय ... भ्वादनयोराख्यातार्थत्वं निष्प्रमाणमिति
चेन्, राम ... विसर्गादिनिष्ठां कर्मकरणादिबोधकतां
युक्ति ... दिना शसादिविधानवत् चकारात्
... वादिशक्तिं तत्स्थानित्वेन कल्पिते
... युरित्याद्यर्थक— लःकर्मणीति सूत्र-
... निर्देशात् कर्तृकर्मपदे कर्तृत्वकर्म-
... यार्थ इति नियमात् कृतिः
... शब्दार्थ इति न्यायात्तयोः
... मीमांसकमते व्यापारस्या-
... वाच्यम् । तुल्ययोग-
... त्वे कर्तरि कृदिति
... च कृत्प्रत्ययवाच्य-
... वाच्यकर्त्रा भाव-
... भवसिद्धान्ताऽसं-
... यम् । जातिः
... पा ... नीति

विवरणमपि नाख्यातार्थत्वसाधकम्, पाकानुकूलव्यापारवतः कर्तुरपि वि
विषयत्वसंभवात्। किञ्च सोमेन यजेत, राजपुरुष इत्यादावभेदान्वयानुरो
भेदबोधे समानविभक्तिकत्वस्यातन्त्रत्वात् देवदत्तः पचतीत्यादावभेदान
पत्तये कर्तुर्वाच्यत्वमावश्यकम्। नच लक्षणया सामानाधिकरण्यं सेत्स्
वाच्यम्। अरुणया पिंगाक्ष्यैकहायन्या सोमं क्रीणातीति वाक्येऽमूर्तस्यारु
गुणस्य क्रयं प्रति करणत्वाऽसंभवात् कथं तृतीयेति संदिह्य पिङ्गाक्ष्
द्रव्यद्वारा क्रियान्वयप्रतिपादकाऽरुणाधिकरणोच्छेदापत्तेः। 'पिङ्गाक्ष्यादि
कानां तत्सम्बन्धिनि लक्षणयैव गवा सह सामानाधिकरण्योपपत्तेरिति दि

प्र०—प्रथमान्तार्थमुख्यविशेष्यकबोधो युक्तो न वेति वि
सिद्धान्तपक्षः समर्थनीयः।

उ०—ननु प्रकृतिप्रत्ययौ ... र्थस्यैव प्रा
मिति न्यायात् देवदत्तः पचती ... ारानु
कृतिमान् देवदत्त इति प्रथम ...
चेन्न, भावप्रधानमाख्यातं सत्त्वप्र ...
वाचो युक्तिः पचति भवती ...
क्रियाप्राधान्यबोधकनूवा ...
स्यैवौचित्यात्। किञ्च ...
दर्शनमिति भाष्यसि ...
दर्शनाश्रयस्त्वमिति ...
धावनानुकूलकृ ...
इति वाच्यम्, ह ...
धिकरण्ये श ...
तमिति कर्माख्या ...
त्वात्। उत ...
प्रेताऽसि ...

णमिति नैयायिकोक्तमयुक्तमेव । किन्तु आख्यातार्थकर्तृप्रकारकशाब्दबोधम्प्रति धातुजन्यभावनोपस्थितिर्हेतुरित्येव कार्यकारणभावो मन्तव्यः । पचति-भवतीत्याद्यनुरोधात् भावनाप्रकारकबोधम्प्रति धातुजन्यभावनोपस्थितिरपि क्वचिद्धेतुरिति दिक् ।

प्र०—तिङर्थाः के ? तेषां परस्पराऽन्वयप्रदर्शनपूर्वकं वैयाकरणनैयायिकमीमांसकमते शाब्दबोधे वैलक्षण्यं कथमिति निरूपणीयम् ।

उ०—कर्तृकर्मसंख्याकालास्तिङर्थास्तत्र कर्तृकर्मणी फलव्यापारयोराधाराधेयभावसम्बन्धेन विशेषणे । संख्या कर्त्तृप्रत्यये कर्त्तरि, कर्मप्रत्यये कर्मणि च प्रकारतयाऽन्वेति, एकप्रत्ययजन्योपस्थितिविषयत्वात् । एवञ्चाख्यातार्थसंख्याप्रकारकबोधम्प्रति आख्यातजन्यकर्त्तृकर्मोपस्थितिर्हेतुरिति कार्यकारणभावः फलितः । कालस्तु धात्वर्थव्यापारे विशेषणम् । न च समानप्रत्ययोपात्तत्वात् संख्यावत् कर्तृकर्मणोरेवान्वयः कुतो नेति वाच्यम्, अतीतभावनाके कर्त्तरि पचतीति प्रयोगापत्तेः, अपाक्षीदिति प्रयोगानुपपत्तेश्च । नापि फले कालस्यान्वयः, फलाऽनुत्पत्तिदशायां व्यापारसत्त्वे पचतीत्यनापत्तेः, पक्ष्यतीत्यापत्तेश्च । न च व्यापारे कालस्य[illegible] रस्योत्थानानुकूलयत्न-

सत्त्वादु[illegible] ज्ञानाभावेन तादृ-

श[illegible] यमुत्तिष्ठति, शक्तय-

[illegible] । तथाच वैयाकरण-

[illegible] ऽभिन्नकर्तृकविक्लित्य-

[illegible] मीमांसकमते फलमात्रं

[illegible] कर्तृप्रकारकबोधम्प्रति

[illegible] पूर्वोक्तप्रकारक-

[illegible] बोधं प्रति प्रथमा-

त्तपदजन्योपस्थितेर्हेतुत्वाच्च, विक्लित्त्यनुकूलव्यापारानुकूलकृतिमान् देवदत्त इति बोध इति दिक्।

प्र०—आख्यातस्य कर्तृकर्मशक्तत्वे पचतीत्यत्रोभयबोधवारण-प्रकारः प्रदर्शनीयः।

उ०—ननु कर्तृकर्मणोराख्यातशक्यत्वे पचतीत्यादावुभयबोधः कुतो न। नच सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति न्यायान्नोभयबोध इति वाच्यम्, हर्यादिपदात् कदाचिदिन्द्रमात्रस्य कदाचिद्विष्ण्वादिमात्रस्य बोधोत्पादवत् कर्ममात्रस्यापि बोधापत्तेरिति चेन्न, सकर्मकधातुसमभिव्याहृत-भावसाधारणविधिविधेयचिण्यगादीनां कर्मद्योतकत्वस्वीकारात्। अत एव पच्यते ओदनः, क्रमादमुं नारद इत्यबोधीत्यादौ यगादिसत्त्वेऽपि न दोष इति दिक्।

प्र०—व्यापारो भावनेत्यादिकारिकां भूषणकाररीत्या साव-तरणं व्याख्याय तद्व्याख्यानस्य पूर्वापरसन्दर्भानुगुण्यं कारिका-नुगुण्यञ्च विवेचनीयम्।

उ०—ननु न भावना धातुवाच्या, तस्या धातुवाच्यत्वे प्रकृतिप्रत्यया-विति न्यायेनाप्राधान्य ... पचति पाकमुत्पा-दयति, पाकानुकूल ... क्रियमाणस्य धातोर्वाचकता युक्त ... स्यत्रैव घटो भवतीत्यत्रापि ...
परया कर्तृसंज्ञया कर्मसं...
कारकचक्रप्रयोक्तृत्वस्य ...
दुर्वचत्वात् धात्वर्था ...
त्वापत्तेश्च। किञ्च ...
फलवाचकत्वं क ...

अन्यतमत्वं सकर्मकत्वमित्यपि न, एकस्यैवार्थभेदेन सकर्मकत्वाकर्मकत्व-दर्शनात्। एवञ्च फलमात्रस्य धात्वर्थत्वे यतीप्रयत्ने इतिवत् सर्वेषामकर्मकतापत्तिर्दुर्वारेति भावः। अथवा व्यापारो भावना इत्यर्थेन व्यापारस्य धातुवाच्यत्वं संसाध्य जानाति करोतीत्यादेः केवलज्ञानयत्नादिक्रियामात्रवाचित्वं तार्किकाभ्युपगतं निराकरोति—कृञ इति। कृञादेर्व्यापारमात्रवाचित्वे पूर्वोक्तरीत्या सकर्मकत्वव्यवहारोच्छेदापत्तिः। नच लक्षणया सकर्मकत्वव्यवहारो भविष्यतीति वाच्यम्, गङ्गापदस्य तीरे भाक्तत्वेऽपि तत्र स्नानादिकार्याभाववत् मुख्यसकर्मकत्वमादाय शास्त्रस्य चारितार्थ्ये गौणे तद्व्यापारे मानाभावेन कर्मणि लकाराऽसंभवात्। अत एव क्रियते घटः स्वयमेवेति प्रयोगोपपत्तिरन्यथा यत्नस्य कर्मनिष्ठत्वाभावेन तादृशप्रयोगानुपपत्तिरिति भावः। ननु या क्रिया भावना सैवोत्पादनाऽपि च सा स्मृता, इत्युक्तेऽपि क्रियाया भावनात्वलाभे कारिकायां व्यापारपदोपादानं विफलमिति चेन्न, फूत्कारादीनामयत्नानामपि फूत्कारत्वादिरूपेण वाच्यत्वबोधनार्थं तस्यावश्यकत्वात्। यद्यपि कृतित्वस्य जातिरूपतया शक्यतावच्छेदकत्वे लाघवात् कृतिरेव धात्वर्थ इति तन्न, पचतीत्यादौ फूत्कारादिप्रकारकबोधाय लक्षणाङ्गीकारे लक्ष्यतावच्छेदकत्वे गौरवस्य दुर्वारत्वादिति दिक्।

प्र०—धातोः फलव्यापारोभयवाचकत्वे क्रियते घटः स्वयमेवेतिवत् ज्ञायते घटः स्वयमेवेति प्रयोगापत्तिवारणोपायः प्रदर्शनीयः।

उ०—ननु कृञादेरिव जानातीत्यादेरपि विषयावच्छिन्नावरणभङ्गादिफलवाचकत्वमावश्यकं, व्यापारमात्रवाचित्वेऽकर्मकतापत्तेः। तथा च ज्ञायते घटः स्वयमेवेति प्रयोगः कुतो नेति चेन्न, कर्मस्थया क्रिययाऽयं कर्त्तारमुपमिमीते इति कर्मवत् कर्मणेति सूत्रस्थभाष्यात् कर्मणेत्युपादानसामर्थ्यात् कर्ममात्रफलरूपकर्मस्थक्रिया लक्ष्यते इति कैयटोक्त्या च निर्वर्त्यविकार्यक-

र्मणोः कर्मवद्भावो नैतु प्राप्ये इत्यदोषात्। प्राप्यत्वञ्च—क्रियाकृतविशेषानुपलभ्यमानत्वम्। एवञ्च घटादेर्द्दश्यादिधातुयोगे प्राप्यकर्मं वाऽन दोष इति दिक्।

प्र०—तस्मात् करोतिर्धातोस्स्यादिति कारिकां सावतरणमुपपादयत।

उ०—ननु प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायबलात्, यः प्रत्ययार्थः स प्रधानमित्यर्थक-'तदागमे हि दृश्यते' इति न्यायाच्च तिङ्वाच्यैव भावना। नापि सकर्मकत्वव्यवहारानुपपत्तिः, स्वयुक्ताख्यातार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वमिति स्वीकारात्। 'घटो भवतीत्यत्र न घटपदात् द्वितीयापत्तिः, आख्यातार्थव्यापाराश्रयत्वेन घटस्य कर्तृत्वादिति मीमांसकोक्तं युक्तमिति चेन्न, गमनपदार्थसंयोगात्मकफलस्य ग्रामे सत्त्वात् ग्रामः संयोगवानितिवद् ग्रामोगमनवानिति प्रयोगस्य प्रामाण्यापत्तेः। फलानुत्याददशायां व्यापारसत्त्वे पाको भवतीति प्रयोगानुपपत्तेश्च, विक्लित्तेरवर्तमानत्वात्। नच भावविहितल्युड्घञाद्यर्थव्यापारस्य ग्रामादौ बाधान्नोक्तदोष इति वाच्यम्, लः कर्मणीति विहितकर्त्राख्यातस्य त्वन्मते व्यापारार्थकत्ववत् कर्त्तरि कृदिति विहितघञादीनामपि व्यापारार्थकत्वसम्भवात् भावे इति सूत्रवैयर्थ्यापत्तेः। पचतीत्यस्य पाकं करोतीति व्याख्यानमपि धातोरेव। किञ्च प्रकृत्यर्थप्रकारकशाब्दबोधं प्रति विशेष्यतासम्बन्धेन तदुत्तरप्रत्ययजन्योपस्थितिर्हेतुरिति कार्यकारणभावमूलकप्रकृतिप्रत्ययाविति न्यायस्य पक्ववानित्यत्र पाकः कर्मकारकम्, क्तवतुप्रत्ययार्थः कर्तृकारकम्, तयोश्चारुणाधिकरणोक्तरीत्या क्रियात्वमेव हि कारिकान्वयिताच्छेदकमिति सिद्धान्तेन चान्वयाभावाद् व्यभिचारः। न च सम्बन्धमात्रमुक्तञ्च श्रुत्या धात्वर्थभावयोः, तदेकांशनिवेशो तु व्यापारोऽस्या न विद्यते इति भट्टपादोक्तदिशा पाकसम्बन्धिकर्त्तेति बोधस्वीकारान्न व्यभिचार इति वाच्यम्, क्रियात्वाभावेन योग्यताविरहात्। अपि च यः प्रधानं स प्रत्ययार्थः, यः प्रत्ययार्थः स प्रधानमेवेति नार्थः, अजेत्यादौ

प्रत्ययार्थस्त्रीत्वस्य प्राधान्यापत्तेः । अतो विशेष्यत्वादिना बोधो व्युत्पत्तिमूलको मन्तव्यः । किञ्च किं कृतम् ? पक्वमित्यत्र कृता विवरणम् । प्रतीतिश्च पक्वमित्यत्रापि भवति तत्रापि भावना वाच्या । नहि तिङ इव कृद्वाच्या भावना, प्रकृतिप्रत्ययाविति न्यायेन कृदन्ते भावनाविशेष्यकबोधापत्तेरिति दिक् ।

प्र०—किं कार्यं पचनीयश्चेत्यादिकारिकाशयो विशदं निरूपणीयः ।

उ०—धातूनां व्यापारावाचकत्वे कार्यो घट इत्यादौ कर्मादिसंज्ञानां कारके इत्यधिकृत्य विहितानां घटादावसम्भवेन कर्मादौ विहितण्यदाद्यनुपपत्तिः । न चालं श्रमेणेतिवत् गम्यमानक्रियामादाय नोक्तदोष इति वाच्यम्, आख्यातेऽपि गम्यमानक्रियामादायैव कर्तृकर्मार्थकप्रत्ययोपपत्तौ तिङ्वाच्या भावनेति भवत्सिद्धान्ताऽसंगतेः । नच लिङ्गसंख्यान्वयानुरोधात् कृतःकर्तृवाचित्वमावश्यकम्, तेन भावनाया आक्षेपात् तत्प्रतीतिस्स्यादिति वाच्यम्, संख्यान्वयोपपत्तये तिङन्तेऽपि तथा वक्तुं शक्यत्वात्, पक्वानित्यत्र कालकारकान्वयानुरोधात् भावनाया अपि वाच्यत्वस्यावश्यकत्वाच्च । किञ्च पुरुषो राज्ञो भार्या देवदत्तस्येतिवत् हरिणा त्रातो हरित्रात इत्यत्रासामर्थ्यात् समासो न स्यात् । न च दध्योदन इत्यादाविवाऽध्याहृतक्रियाद्वारा सामर्थ्यमादाय समासस्स्यादिति वाच्यम्, सूत्रारम्भसामर्थ्यादगत्या तत्र तथा स्वीकारेऽपि हरिकृतम् इत्यादौ साक्षाद्धात्वर्थान्वयेनोपपद्यमानस्य कर्तृकरणे इत्यस्य स्वकर्तृकादिक्रियाजन्यत्वरूपपरम्परासम्बन्धे प्रवृत्त्यसंभवात्, एकक्रियान्वयित्वरूपसामर्थ्याश्रयणे तु असूर्यंपश्येत्यादेरसमर्थसमासत्वानुपपत्तिरिष्टापत्तिस्तु न, सह सुपेति शास्त्रेण कृतः सर्वो मृत्तिकयेत्यत्र कृतसर्वमृत्तिक इत्यापत्तेः । किञ्च भावयति घटमितिवद् भवति घटमिति प्रयोगापत्तिः, फलाश्रयत्वेन कर्मत्वात् । न चाख्यातार्थव्यापाराश्रयत्वेन कर्तृत्वात् परया कर्तृसंज्ञया कर्मसंज्ञाया बाधान्न दोष इति वाच्यम्, तादृशकर्तृत्वाङ्गीकारे पाचयति देवदत्तो विष्णुमित्रेणेत्यत्र विष्णुमित्रस्य कर्तृत्वाभावेन तृतीयानापत्तेः, ग्रामं गमयति देवदत्तो विष्णु-

मित्रमित्यत्र प्रयोज्यस्याकर्तृतापत्तौ ग्रामस्य गमिकर्मत्वानापत्तेश्च। किञ्चाख्यातार्थव्यापाराश्रयत्वस्य केवलान्वयितया तस्मिन् प्रयोगे य आख्यातार्थ इत्यस्यावश्यकत्वेनाख्यातशून्ये देवदत्तः पक्तेत्यादौ देवदत्तस्याकर्तृतापत्तेश्च। किञ्च धातोर्व्यापारवाचित्वाभावे क्रियावाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वमित्यर्थक—भूवादयो धातव इति सूत्रवैयर्थ्यापत्तिरिति दिक्।

७ प्र०—धातुसंज्ञाविधायकसूत्रे क्रियापदेन कस्य ग्रहणमिति साधूपपादयत।

उ०—ननु क्रियावाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वमित्येव लक्षणमस्तु क्रियापदेन फलमात्रस्य ग्रहणान्न भूवादय इत्यस्य वैयर्थ्यमिति चेन्न, यदि क्रियात्वं धात्वर्थत्वमेव स्वीक्रियते तदा धातुत्वज्ञाने तदर्थत्वरूपक्रियात्वज्ञानमपेक्षितम्, क्रियात्वज्ञाने च तदवच्छिन्नवाचकत्वघटितधातुत्वज्ञानमित्यन्योन्याश्रयापत्तेः। न च भ्वादिभिन्नभिन्नत्वं धातुत्वमिति स्वीकारान्नोक्तदोष इति वाच्यम्, भूवादय इत्यस्य वैयर्थ्यापत्तेः। न च सत्तादीन् फलांशानन्यतमत्वेनादाय तद्वाचकत्वे सति गणपठितत्वमिति स्वीकारान्न दोष इति वाच्यम्, विकल्पयतीति प्रयोगानुसारादन्यतममध्ये विकल्पस्यापि प्रवेशावश्यकत्वेन तदर्थके वेत्यव्ययेऽतिव्याप्तेः। तथा च व्यापारसन्तानः क्रिया, तद्वाचकत्वे सति गणपठितत्वं धातुत्वम्। न चास्तीत्यादौ क्रियाप्रतीत्यभावात् कथं धातुसंज्ञेति वाच्यम्, स ततो गतो नवेति प्रश्ने महता यत्नेनाऽस्तीति प्रयोगे सत्तारूपफलानुकूलभावनायाः प्रतीतिसत्त्वात्, रोहितो लोहितादासीदित्यादौ तथा दर्शनाच्च। किञ्च क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिकेति नियमात् भावनाविरहे लडादिव्यवस्थानुपपत्तिः। भावनायाः फलसामानाधिकरण्यादस्तीत्यादौ स्पष्टतया न क्रियायाः प्रतीतिरिति दिक्।

प्र०—पाक्षि इत्यत्रासत्त्वभूतक्रियायाः प्रतीत्यभावे प्रमाणमुपपादयत।

उत्तरम्—नन्वसत्त्वभूतक्रियायाः धात्वर्थत्वे पाक इत्यत्रापि तत्प्रतीति-स्यादिष्टापत्तिस्तु न, कृदभिहितो भावो द्रव्यवत् प्रकाशते इति भाष्यविरोधा-दित्यभिप्रेत्याह—आख्यातशब्दे इति । पश्य मृगो धावतीत्यादौ तिङन्ताभ्यां यथा साध्यत्वेन साधनत्वेन च प्रतीतिर्भवति, तथा पाक इत्यत्र प्रकृत्या साध्यावस्थायाः प्रत्ययेन च साधनावस्थायाः प्रतीतिः । न चानयोर्लिङ्गसंख्या-न्वयित्वानन्वयित्वेन वैषम्यात् कथं दृष्टान्तदार्ष्टान्तिकभाव इति वाच्यम्, कार-कत्वेनान्वयित्वमात्रेण सादृश्यविवक्षणात् । साध्यत्वञ्च—क्रियान्तराकाङ्क्षानु-त्थापकतावच्छेदकरूपवत्त्वम्, कारकत्वेनान्वयित्वं साधनत्वम् । नच पाक इत्यादौ धातुना साध्यावस्थायाः क्रियाया अभिधाने प्रमाणाभाव इति वाच्यम्, तण्डुलस्य पाक इत्यत्र कर्मषष्ठ्या एव मानत्वात् कारकाणां साध्यस्वभावक्रिया-न्वयनियमेनौदनस्याऽकारकतयाऽकर्मकत्वेन षष्ठ्यनुपपत्तेः । न चाध्याहृततिङ-न्तक्रियान्वयात् षष्ठी भविष्यतीति वाच्यम्, कर्तृकर्मणोरित्यनेन कृदन्तयोगे एव तद्विधानान्न लोकेति लादेशयोगे षष्ठीनिषेधाच्च । अतएव काष्ठैः पाक इति प्रयोगोपपत्तिः । धातुवाच्यफलांशस्यापि भानमसत्त्वरूपेणैव । तेन स्तोकं पाक इति सिद्ध्यतीति दिक् ।

प्र०—घञादिभिः सिद्धत्वेनाभिधाने प्रमाणमुपदर्श्यताम् ।

उ० ननु घञादिभिः सिद्धावस्थायाः क्रियायाः प्रतीतौ न किञ्चिन्मान-मिति चेन्न, पाक इत्युक्ते भवति नष्टो वेत्याकाङ्क्षादर्शनस्यैव मानत्वात् । स्तोकः पाक इत्यनुरोधाच्च । एवञ्च धात्वर्थान्वये स्तोकादिशब्देभ्यो द्वितीया, घञर्थान्वये प्रथमा पुँल्लिङ्गता चेति तदर्थं घञि शक्तिः स्वीकार्या । न च घञन्तशक्त्युपस्थाप्यान्वये स्तोकः पाक इति सेत्स्यतीति वाच्यम् । घञन्तानु-पूर्व्याः शक्ततावच्छेदकत्वे गौरवात् । न च वृत्तिमात्रे समुदायशक्तिरिति सिद्धान्ताऽसंगतिरिति वाच्यम्, समुदायशक्तिस्वीकारस्यावश्यकत्वेऽपि कर्तरि कृदित्यनुशासनानुरोधात् घञ्यपि शक्तेरावश्यकत्वात् । अत एव कृदभिहितो भावो द्रव्यवत्प्रकाशते इति भाष्यं संगच्छते इति दिक् ।

प्र०—सम्बोधनादिपदार्थाऽष्टकस्य कथं क्रियाऽन्वयस्तत्र च व्यापाररूपक्रियाग्रहणे प्रमाणं किमिति सर्वमुपपादनीयम् ।

उ०—ननु तण्डुलस्य पाक इत्यादौ कर्मषष्ठ्यनुसारेण भावनाया धातुवाच्यत्वेऽसिद्धावपि कारकाणां भावनाऽन्वय इत्यत्र किं मानमित्याशयेनाह—सम्बोधनान्तं कृत्वोऽर्था इत्यादि । अयमाशयः—सम्बोधनान्तस्य क्रियायामन्वयः त्वं ब्रूहि देवदत्त इत्यादौ निघातानुरोधात् । अन्यथा आख्यातं सविशेषणं वाक्यमिति समर्थसूत्रस्थभाष्यानुरोधात् साक्षात् परम्परया वा पदार्थान्तराऽन्वितक्रियाबोधकाख्यातस्यैकवाक्यतालाभेन प्रकृते तदभावात् समानवाक्ये इति प्रकृत्यामन्त्रितस्येति निघातानुपपत्तिः । तदुक्तं—सम्बोधनपदं यच्च तत्क्रियायां विशेषणम्, व्रजानि देवदत्तेति निघातोऽत्र तथासति । पचति भवतीत्यादौ सूत्रभाष्यादिरीत्या समानवाक्यत्वसत्त्वान्निघातसिद्धिः, तिङ्ङतिङ इति सूत्रेऽतिङ्ग्रहणेन तिङन्तानामप्येकवाक्यत्वस्वीकारात् एकतिङ्वाक्यमिति मते न । वस्तुतस्तु स्वघटितत्व, स्वार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकपदघटितत्वस्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन तिङन्तविशिष्टत्वमेकवाक्यत्वम् । सम्बन्धघटकवैशिष्ट्यञ्च—स्वेतरत्व स्वार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकेतरत्वोभयसम्बन्धेनेति । कृत्वोर्था इति, क्रियाभ्यावृत्तिगणने कृत्वसुच् इत्यनेन क्रियायोगे कृत्वसुजादिविधानात्तद्द्योत्यार्थस्य क्रियायामन्वयः । करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्त्या कारकशब्दस्य क्रियापरत्वेनापादानादिसंज्ञाविधिषु क्रियार्थककारकशब्दानुवृत्त्या क्रियान्वयिनामेव संज्ञेति भावः । तेन तुल्यं क्रिया चेद्वतिरिति विहितवत्यर्थस्य क्रियायामन्वयस्तत्र यत्तुल्यं सा क्रिया चेदित्युक्तत्वात् धातुसम्बन्धाधिकारे विहितप्रत्ययार्थानामपि क्रियान्वयः । धातुसम्बन्धे प्रत्यया इत्यत्र धातुपदस्य धात्वर्थपरत्वात् । समासाऽयोग्यस्य प्रसज्यप्रतिषेधीयस्य नञर्थस्य क्रियान्वयः, चैत्रो न पचतीत्यादौ क्रियाया एव निषेधप्रतीतेः । यस्य च भावेन भावलक्षणमिति सूत्रेषु क्रियाज्ञापकक्रियाश्रयवाचकपदात् सप्तमीविधानात्तदर्थस्य क्रियाऽन्वयः । षष्ठी चानादरे इति

विहितषष्ठ्यर्थस्यापि क्रियान्वयः। भूवादिसूत्रे क्रियाशब्देन भावनाव्यपदेशा-त्तत्र क्रियाशब्दस्य रूढिः। क्रियते=व्यापारेण निष्पाद्यते इति व्युत्पत्त्या फलांशे क्वाचित्कः प्रयोगस्तथाच रूढिर्योगापहारिणीति सिद्धान्तात् क्रियापदेन तत्र भावनाया एव ग्रहणम्। अत एव रथन्तरमुत्तराग्रन्थपठितऋक्ष्वेव गेयं न तु तदुत्तरपठ्यमानऋक्ष्विति संगच्छते इति दिक्।

प्र०—अचिप्रहा गतादिस्थेति कारिकाशयो व्याख्यायताम्।

उ०—ग्रामं गत इत्यत्र यथा क्तप्रत्ययार्थे विशेषणीभूता गमना-दिक्रिया ग्रामादिभिः सम्बध्यते तथा कृतपूर्वी कटमित्यत्रापि। नच वृत्ति-मात्रे समुदायशक्तेः स्वीकारादेकदेशभावनायां कथमन्वय इति वाच्यम्, देव-दत्तस्य गुरुकुलम्, चैत्रस्य नप्तेत्यादावेकदेशे गुरौ जन्यत्वरूपे चान्वयदर्शनेन पदार्थः पदार्थेनेति नियमस्य नित्यसापेक्षातिरिक्तविषयत्वात्। एवं गुणी-भूतां क्रियामादाय भुक्त्वा पाक इत्यादौ क्त्वाद्युपपत्तिः। नच एकः पाको द्वौ पाकौ त्रयः पाका इत्यादौ पूर्वोक्तरीत्या पच्वाच्यक्रियामादाय सकृदादेश-स्सुजाद्यापत्तिश्चेति वाच्यम्, द्विर्वचनेऽचीति निर्देशेनेष्टत्वात्। अथवा क्रियाया एवाभ्यावृत्तिसम्भवेन क्रियाभ्यावृत्तिगणने इति सूत्रे क्रियाग्रहणसामर्थ्यात् साध्यमात्रस्वभावक्रियायोगे तद्विधानेनादोषः। द्विर्वचनमिति तु द्विःप्रयोगो द्विर्वचनमिति भाष्यप्रयोगादुपपादनीयमिति दिक्।

प्र०—भेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनमित्यादि कारिका-शयो विशदं निरूपणीयः।

उ०—नन्वाख्यातात् भावनाबोधस्य जायमानत्वात्तत्रापि बोधकताशक्ति-रबाधिता। तथाच धातोरेव भावना वाच्या, नाख्यातस्येति कथं निर्णय इत्याश-येनाह—भेद्यभेदक इति। जातिप्रवृत्तिनिमित्तकोऽश्वशब्दस्तुरगे न साधुर्धनाभाव-प्रवृत्तिनिमित्तकस्तु साधुरेवमश्वत्वजातिप्रवृत्तिनिमित्तकोऽश्वशब्दस्तुरगे साधु-र्धनाभावतात्पर्येणासाधुः, एवञ्च व्याकरणशास्त्रेण यस्य शब्दस्य यस्मिन्नर्थे साधुत्वं प्रतिपादितं तत्रैव तस्य साधुत्वमिति फलितम्। तथाच साधुत्वज्ञान-

विषया सैषा व्याकरणस्मृतिरिति सिद्धान्तात् साधुशब्दे बोधजनकत्वावच्छेदकतया कल्प्यमानधर्मस्य शक्तित्वमिति मीमांसकमते शक्तत्वसाधुत्वयोरैक्यात् । साधुत्वनिर्णयानन्तरमेव शक्तिनिर्णयस्स्यात्तथा च लः कर्मणि चेत्यनुशासनेनाख्यातस्य भावनायामसाधुत्वबोधनात् भावनाबोधतात्पर्येणाख्यातप्रयोगे चतुर्थ्यर्थे तृतीयाप्रयोगवद् याज्ञे कर्मणि नानृतं वदेदिति निषेधोल्लङ्घनप्रयुक्तं प्रायश्चित्तं मीमासकानां दुर्वारमेव । न च नानृतं वदेदिति निषेधस्य क्रत्वर्थत्वानुपपत्तिः, आख्यातेन कर्त्तुरुक्तत्वाच्छ्रुत्या पुरुषार्थता, प्रकरणात् क्रत्वर्थता, तत्र प्रकरणापेक्षया श्रुतेर्बलवत्त्वात् पुरुषार्थतैव स्यादिति वाच्यम् । आख्यातश्रुत्या कर्त्तुरुपस्थानेऽपि भावनावत्तस्य प्राधान्याभावेन श्रौतनञर्थसम्बन्धाभावात् । (नच कर्त्तृवृत्तिभावनायाः प्राधान्यात्तस्या नञर्थान्वये तद्द्वाराख्यातकर्त्तुरपि तत्रान्वयान्न श्रौतपुरुषार्थत्वानुपपत्तिरिति वाच्यम्) जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू, इति वाक्योक्तमन्त्रविधिवदनुष्ठाने विशेषाभावेन पुरुषार्थत्वेऽपि दोषाभावात् । नच शाब्दबोधं प्रति साधुत्वप्रकारकज्ञानस्य हेतुत्वादाख्यातस्य भावनायामसाधुत्वे कथं मीमांसकानां ततो बोध इति वाच्यम्, अपभ्रंशादपि बोधोदयेन तादृशनियमे प्रमाणाभावादिति दिक् ।

प्र० वर्त्तमानत्वं निर्दोषं परिष्कृत्य तत्प्रत्ययवाच्यं प्रकृतिवाच्यं वेति विवेचनीयम् ।

उ०—वर्त्तमाने लडित्यनुशासनात् वर्त्तमानार्थे लड् विधीयते (वर्त्तमानत्वञ्च—न तावद्भूतभविष्यद्भिन्नत्वमन्योन्याश्रयात् । प्रारब्धापरिसमाप्तत्वमपि न, ह्यो दशवादनमारभ्य द्विवादनपर्यन्तं जातपाकगतद्वादशवादनकालिकपचिक्रियाबोधनतात्पर्येणाद्यापि पचतीति प्रयोगापत्तेरतो धातुविशिष्टत्वं वर्त्तमानत्वम् । वै० स्वप्रयोगाधिकरणत्व, स्ववाच्ययावद्व्यापारप्रतियोगिकप्रागभावकूटानधिकरणत्व, स्ववाच्ययावद्व्यापारप्रतियोगिकध्वंसकूटानधिकरणत्वैतत्त्रितयसम्बन्धेनेति । पचतीत्यादावधिश्रयणाद्यधःश्रयणान्ते मध्ये तस्य सत्त्वाल्लट्सिद्धिः ।) न चात्माऽस्ति, पर्वताः सन्तीत्यादौ पूर्वोक्तवर्तमानत्वाभावात् कथं लडिति

वाच्यम् । तत्तत्कालिकानां राज्ञां क्रियाया अनित्यत्वात्तद्विशिष्टस्योत्पत्त्यादिकमादायोपपत्तेः तदुक्तं भाष्ये—इह भूतभविष्यद्वर्त्तमानानां राज्ञां क्रियास्तिष्ठतेरधिकरणम्। परतो भिद्यते सर्वमात्मा तु न विकम्पते इत्यादि वाक्यपदीये च । एवं तम आसीदित्यादिश्रुतयो भूतादिक्रियागतभूतत्वाद्यारोपेण योज्याः । क्रियासामान्यवाचकस्य धातोर्वर्त्तमानत्वादिविशिष्टे लक्षणायां लडादेस्तात्पर्यग्राहकत्वम्, प्रत्ययानां वाचकत्वविलोपापत्तिभिया अन्वयव्यतिरेकाभ्यां वर्त्तमानत्वं लडादिवाच्यमेवेति पक्षान्तरमिति दिक् ।

प्र०—क्रियायां परोक्षत्वं कीदृशं प्रदर्शितं कौ च तत्र चोद्यपरिहारौ कृतौ सारकृतेति साधूपदर्शनीयम् ।

उ०—अद्यतनानद्यतनभेदेन कालो द्विविधः । द्विविधोऽपि भूतभविष्यद्रूपस्तत्रानद्यतने भूते परोक्षे लिड् भवति । परोक्षत्वञ्च —साक्षात्करोमीत्येतादृशविषयताशालिज्ञानाविषयत्वम् । नच कस्याश्चित्क्रियायाः प्रत्यक्षत्वे तथाविधाभिप्रायेण तादृशप्रयोगव्यावृत्त्यर्थं परोक्ष इति पदं सार्थकं भवेत् तच्च न, क्रियानामेयमत्यन्तापरदृष्टेति भाष्यात् क्रियायाः प्रत्यक्षविषयत्वाभावादेवञ्च परोक्षपदोपादानं विफलमिति वाच्यम्, पिण्डीभूतायाः क्रियायाः प्रत्यक्षाविषयत्वेऽप्यवयवशः साक्षात्करोमीति प्रतीतिविषयत्वसम्भवात् । अत एव पश्य मृगो धावतीत्यत्र धावनक्रियाया दृशिकर्मता सिद्धा । केचित् व्यापाराविष्टानां क्रियानुकूलसाधनानामेवात्र पारोक्ष्यं विवक्षितम्, तेन पश्य मृगो धावतीत्यादौ न दोष इति । नच स्वक्रियायाः स्वप्रत्यक्षत्वात् 'व्यातेने किरणावलीमुदयनः' इत्यत्र कथं लिडिति वाच्यम्, तस्याप्रामाणिकत्वात् । मत्तोऽहं किल विललापेतिवत् स्वव्यापारस्य परोक्षत्वोपपादनेऽपि बहुतरमनःप्रणिधानसाध्यशास्त्रार्थनिर्णयजनकशब्दरचनात्मके ग्रन्थे ऽनद्यतनातीतत्वयोरभावेन तदर्थकलिडसम्भवा दिति दिक् ।

प्र०—लिडर्थे वादिनां विप्रतिपत्तीः प्रदर्श्य वैयाकरणसिद्धान्तं स्फुटमुपपादय ।

उ०—विध्यादीनां चतुर्णां प्रवर्त्तनायामन्तर्भावात् प्रवर्त्तनासंप्रश्नप्रार्थनेषु लिङित्येवसूत्रमस्तु। तदुक्तं वाक्यपदीये – अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षयेत्यादि। प्रवर्त्तनात्वञ्च—प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम्। तच्चेष्टसाधनत्वस्यास्तीति, इष्टसाधनत्वमेव विध्यर्थः। नच लोके कृतिसाध्यत्वज्ञानस्य प्रवर्त्तकत्वेन प्रवर्तकज्ञानविषयतावच्छेदकत्वं कृतिसाध्यस्यापि सम्भवतीति तदपि कुतो न विध्यर्थ इति वाच्यम्, यागो मत्कृतिसाध्यो मत्कृतिसाध्यत्वविरोधिधर्मानधिकरणत्वादित्याद्यनुमानेन तस्यावगमात्, नन्वेवमपि मधुविषसम्पृक्तान्नभोजनादौ प्रवृत्तिवारणाय बलवदनिष्टाजनकत्वज्ञानस्यापि हेतुत्वमावश्यकम्, तथाच तदपि कुतो न विध्यर्थ इति चेन्न द्वेषाभावेनान्यथासिद्धत्वात्। नचान्वयव्यतिरेकयोभयत्रसाम्यात् बलवदनिष्टाजनकत्वेन द्वेषाभावस्यान्यथासिद्धिः कुतो नेति वाच्यम्, आस्तिककामुकस्य नरकसाधनताज्ञानदशायामप्युत्कटेच्छया द्वेषाभावदशायां प्रवृत्तेर्व्यभिचाराच्च। तदुक्तं मण्डनमिश्रैः—पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः, प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्त्तनामिति दिक्।

प्र०—अतीतानागतादिपरोक्षस्थले कर्मत्वोपपादनप्रकारः प्रदर्शनीयः।

उ०—ननु कर्त्तुरीप्सिततमं कर्मेति सूत्रेण क्रियाजन्यफलाश्रयस्य कर्मत्वविधानात् घटं जानातीत्यादौ ज्ञानजन्यावरणभङ्गरूपफलाश्रयत्वेन विद्यमानघटस्य कर्मत्वेऽपि भाविविनष्टघटे निराश्रयस्य ज्ञानजन्यावरणभङ्गस्यासंभवात् कथं तत्र कर्मतेति चेन्न, यथापूर्वं जानामीति प्रयोगानुरोधात् भाविविनष्टस्थलेऽपि ज्ञानजन्यावरणभङ्गस्यावश्यकत्वादन्यथा ऽतीतदशायामाधुनिकज्ञानस्यावरणभङ्गाजनकत्वेन यथापूर्वं न जानामीति प्रयोगस्य प्रामाण्यापत्तेः। नच विनष्टे घटे वास्तवतदाश्रयतैव कथमिति वाच्यम्, यथा ऽनुभवानुरोधेन तीतघटे विषयतया ज्ञानाश्रयताङ्गीकारो नैयायिकानां तथा ऽस्माकमपीत्यदोषात्, नन्वतीतो घटो ज्ञानविषय इति प्रतीत्यनुरोधात् तादृशघटस्य विष-

तथा ज्ञानाश्रयत्वेऽपि, आवरणभङ्गाश्रयतायां प्रमाणाभाव इति चेन्न, सत्कार्यवादसिद्धान्तेनोपपत्तेः । तदुक्तं—तिरोभावाऽभ्युपगमे भावानां सैव नास्तिता, लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते इति दिक् ।

प्र०—फलाश्रयस्य कर्मत्वे प्रयागात् काशीं गच्छति चैत्रे चैत्रप्रयागयोरापतितं कर्मत्वं कथं तार्किकैर्निराक्रियते तच्च युक्तन्न वेति विविच्यताम् ।

उ०—ननु व्यापारजन्यफलाश्रयस्य कर्मसंज्ञाविधानात् प्रयागतः काशीं गच्छति चैत्र इत्यत्र संयोगरूपफलाश्रयत्वेन चैत्रस्य विभागरूपफलाश्रयत्वेन प्रयागस्य च कर्मतापत्तिरिति चेन्न, परत्वा कर्तृ संज्ञया कर्मसंज्ञाया बाधेनोक्तापत्त्यसंभवात् । नच कर्मसंज्ञाया बाधनेऽपि वास्तवकर्मत्वस्य तत्राबाधाद् द्वितीयापत्तिर्दुर्वारेति वाच्यम्, गमयति कृष्णं गोकुलमितिवत् पाचयति कृष्णेनेत्यत्र कृष्णपदाद् द्वितीयापत्तिवारणाय द्वितीयोत्पत्तौ संज्ञाया एव नियामकत्वात् । नचैवमपि चैत्रनिष्ठसंयोगानुकूलश्चैत्रकर्तृको वर्त्तमानो व्यापार इति शाब्दबोधः कुतो नेति वाच्यम्, धात्वर्थफलविशेष्यकबोधं प्रति प्रकारतासम्बन्धेन धात्वर्थव्यापारानधिकरणाश्रयोपस्थितेर्हेतुत्वेनादोषात् । समभिव्याहृतधात्वर्थफलशालित्वस्य क्रियाजन्येत्यनेन विवक्षणात् विभागस्य तथात्वाभावेन न प्रयागस्य कर्मत्वम् । अत्र तार्किकाः—आद्यदोषवारणाय परसमवेतत्वं धात्वर्थक्रियायां विशेषणम्, प्रयागस्य कर्मत्ववारणाय च धात्वर्थतावच्छेदकत्वं फले विशेषणम् । तथाच—परसमवेतक्रियाजन्यधात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति वदन्ति । द्वितीयार्थपरसमवेतत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति भावनात्वावच्छिन्नविशेष्यतासम्बन्धेन धातुजन्योपस्थितिर्हेतुरिति कार्यकारणभावानुरोधात् परसमवेतत्वं धात्वर्थक्रियायामन्वेति । तण्डुलं पचति चैत्र इति वाक्यात् तण्डुलसमवेतधात्वर्थतावच्छेदकविक्लित्त्यनुकूलतण्डुलान्यसमवेतक्रियाजनकक-

तिमांश्चैत्र इति बोध इति तन्न, गौरवात्। पाचयति कृष्णं गोप इत्यापत्तेश्च। तन्मते द्वितीयोत्पत्तौ कर्मसंज्ञाया नियामकत्वाभावात् तण्डुलं पच्यते स्वयमेवेत्यापत्तेश्च, परसमवेतत्वादेरिष्टान्वयलाभाय पूर्वोक्तरीत्या कार्यकारणभावेऽतिगौरवाच्चेति दिक्।

प्र०—कर्मभेदाः कियन्तः, कानि च तदुदाहरणानि, कोऽस्ति च निर्वर्त्यविकार्ययोर्भेद एतत्सर्वं समुपपादनीयम्।

उ०—ईप्सितानीप्सितभेदेन द्विविधं कर्म, तत्रेप्सिततमं त्रिविधं, निर्वर्त्यं विकार्यं, प्राप्यञ्च। प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति निष्पाद्यत्वं निर्वर्त्यत्वम्। यथा घटं करोति, प्रतीयमानप्रकृतिविकृतिभावकत्वे सति क्रियानिर्वाह्यविशिष्टासत्त्वोत्पत्त्यन्यतरफलवत्त्वं विकार्य्यत्वम्। यथा—काष्ठं भस्म करोति, सुवर्णं कुण्डलं करोतीति। क्रियाप्रयोज्याऽसाधारणधर्मप्रकारकप्रतीतिविषयताऽनाश्रयत्वं प्राप्यत्वम्। यथा—घटं पश्यति। अनीप्सितं चतुर्विधम्। उदासीनं यथा तृणं स्पृशति। विषं भुंक्ते इति द्वेष्यम्। गां दोग्धीति संज्ञान्तरैरनाख्यातम्। क्रूरमभिक्रुद्ध्यतीत्यन्यपूर्वकमिति दिक्।

प्र०—धातुनोक्तक्रिये नित्यमित्यादिवाक्यपदीयेन व्याससूत्रविरोधं प्रदर्श्य तत्समाधानप्रकारः प्रकाशनीयः।

उ०—स्वतन्त्रः कर्त्तेत्यनुशासनात् कर्त्तृतृतीयाया आश्रयोऽर्थः। स्वातन्त्र्यञ्च—प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयत्वम्। तदुक्तं वाक्यपदीये—धातुनोक्तक्रिये नित्यं कारके कर्त्तृतेष्यते इति। अत एव यदा यत्कारकगतव्यापारो धातुनाऽभिधीयते तदा स कर्त्तेति स्थाली पचति, एधांसि पचन्तीत्यादय उपपन्नाः। नच कर्मकर्त्तृव्यपदेशाच्चेति सूत्रे मनोमयः प्राणशरीर इति वाक्यस्य मनोमयपदस्य जीवत्वे वाक्यशेषे तस्य एतमितः प्रेत्याभिसम्भवितास्मि, इतः शरीरात्प्रेत्य=निर्गत्य, एतं=स्वप्रकाशत्वादिगुणविशिष्टं प्राप्तारू

स्यर्थकेन वाक्यशेषेणैकस्य प्राप्तिकर्मत्वकर्त्तृत्वव्यपदेशो विरुद्ध इति व्यासोक्ति-र्न संगच्छते, भवन्मते वैवक्षिकयोः कर्त्तृत्वकर्मत्वयोरेकस्मिन्नपि सम्भवादिति वाच्यम्, जीवस्यैव ज्ञेयत्वेन प्राप्तिकर्मत्वम्। आख्यातेन च तस्य कर्त्तृत्वमुक्तम्। संज्ञयोराकडारीयतया समावेशाऽसम्भवेन परया कर्त्तृसंज्ञया कर्मसंज्ञाया बाधात् एतमिति द्वितीया न स्यादिति शब्दविरोधेऽधिकरणतास्यात्। त्रिविधः कर्त्ता, शुद्धप्रयोजककर्मकर्त्तृभेदात्। मया हरिः सेव्यते इति शुद्धः कर्त्ता, कार्यते हरिणा इति प्रयोजको हेतुः, गमयति कृष्णं गोकुलमिति कर्मकर्त्तेति दिक्।

प्र०—करणतृतीयाया अर्थं निरूप्य शक्तिविपर्ययादिति ग्रन्थाशयो विशदं व्याख्येयः।

उ०—साधकतमं करणमितिसूत्रस्वरसात् करणतृतीयाया आश्रयव्यापारौ वाच्यौ। तमवर्थः प्रकर्षः, सचाव्यवधानेन फलजनकव्यापारवत्त्वरूपः। तथाचाव्यवधानेन फलजनकव्यापारवत् कारणं करणमिति। तदुक्तं वाक्यपदीये—क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्, विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतमित्यादि। नचैकस्मिन् करणकर्त्तृशक्त्योरविरोधस्वीकारे यजेत, जुहुयादित्यादिशास्त्रस्य सार्थक्याय जीवः कर्त्ता भवितुमर्हति, विज्ञानशब्दवाच्यबुद्धेः कर्त्तृत्वे नु करणशक्तिर्बुद्धेर्हीयेत कर्त्तृशक्तिश्चापद्येत, इति शक्तिविपर्ययापत्तिरूपदोषोक्तिः कथ संगच्छेतेति वाच्यम्, बुद्धेः कर्त्तृत्वे तदेवैतेषामित्यादि श्रुत्यन्तरे करणतया क्लृप्तस्य विज्ञानं यज्ञं तनुते इत्यादौ कर्त्तृत्वविवक्षायां बाधकाभावेऽपि द्वयोः शक्त्योर्युगपद्विवक्षाऽसम्भवेन विज्ञानेनेति तृतीयान्तनिर्देशाऽसंगतेरिति शक्तिविपर्ययादित्यस्याशयात्। वस्तुतस्तु यथा वास्यादिकरणहस्तः कर्त्ता दुःखी भवति तद्रहितः सुखी भवति तथा बुद्धेः कर्त्तृत्वनिरासे तात्पर्यं नतु बुद्धेः कर्त्तृत्वेन करणशक्तिपरित्याग इति दिक्।

प्र०—पञ्चमीविभक्त्यर्थः कः? किञ्च तल्लक्षणमिति निरुच्य पर-

स्परान्मेषावपसरत इत्यत्र पञ्चमी ग्रन्थकृता कथं समर्थिता ? तत् युक्तं नवेति साधु विवेचनीयम्।

उ०—अपायो विश्लेषस्तज्जनकक्रिया तत्रावधिभूतमपादानमित्यर्थकात् ध्रुवमपायेऽपादानमिति सूत्रस्वरसादपाये यदुदासीनं चलं वा यदि वाऽचलम्, ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते इति वाक्यपदीयाच्चावधिः पञ्चम्यर्थः। तथाच विश्लेषहेतुक्रियानाश्रयत्वे सति विश्लेषाश्रयत्वमवधित्वम्। वृक्षात् पर्णं पततीत्यत्र पर्णस्यावधित्ववारणाय विशेषणदलम्, धावतोऽश्वात् पततीत्यत्राश्वस्य क्रियाश्रयत्वादव्याप्तिवारणाय विश्लेषहेत्विति। नच कुड्यात् पततोऽश्वात् पततीत्यत्राऽश्वस्य विश्लेषजनकक्रियाश्रयत्वादुक्तापत्तिस्तदवस्थेति वाच्यम्, तद्विश्लेषहेतुक्रियानाश्रयत्वे सतीति विशेषणदानेनादोषात्। ननूभयकर्मजविभागस्थले विभागस्यैक्यात् तद्विश्लेषजनकक्रियाश्रयत्वात् परस्परान्मेषावपसरत इति प्रयोगासंगतिरिति चेन्न, तद्विभागजनकतत्क्रियानाश्रयत्वे सति धात्वर्थतत्क्रियाजन्यतद्विभागाश्रयत्वमितिस्वीकारेणादोषात्। तथाहि निश्चलमेषस्थल इवात्रापि विभागस्यैकत्वेऽपि क्रियाभेदादेकक्रियामादाय परस्यापादानत्वमिति। क्रियाशब्देन प्रकृतधात्वर्थक्रियाया विवक्षणाद् वृक्षकर्मजविभागवति वस्त्रे वृक्षाद् वस्त्र पततीति प्रयोगोपपत्तिः। वस्तुतस्तु विभागाश्रयमात्रं पञ्चम्यर्थः। पूर्वोक्तलक्षणन्त्ववधेरेव, पञ्चमीवाच्यत्वे गौरव त्। आसनाच्चलितो राज्याच्चलित इतिवद् वृक्षात् स्पन्दत इति प्रयोग इष्ट एव। नच धात्वर्थक्रियाजन्यविभागाश्रयत्वेनापादानत्वाद् वृक्षात् त्यजतीति प्रयोगस्य प्रामाण्यापत्तिरिति वाच्यम्, कर्मसंज्ञया अपादानसंज्ञाया बाधेनादोषात्। पञ्चमीजन्यापादानत्वबोधे त्यजादिभिन्नधातुजन्योपस्थितेर्हेतुत्वात् भ्रमात्तादृशप्रयोगे कृतेऽपि न बोध इति। (वस्तुतस्तु त्रस्तादश्वात् पतित इत्यत्र गतियुक्तेष्वपादानसंज्ञा नोपपद्यतेऽध्रुवत्वादित्याशङ्क्य नवाऽध्रौव्यस्याविवक्षितत्वादितिसमाधानपरभाष्यविरोधान्न पूर्वोक्तप्रकारः समीचीन इति।) निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा, अपेक्षितक्रियञ्चेति त्रिधाऽपादानमुच्यते इति वाक्यपदीयादपादान

त्रिविधम् । यत्र साक्षात् समभिव्याहृतधातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयम्, यथाऽश्वात् पतति । यत्र धात्वन्तरार्थाङ्गं स्वार्थं धातुराह तदुपात्तविषयम्, यथा बलाहकाद्विद्योतते । अनुपात्तधात्वर्थक्रियासाकाङ्क्षमपेक्षितक्रियम्, यथा कुतो भवान् ? पाटलिपुत्रात्, इति दिक् ।

प्र०—वरुणाय दण्डं प्रयच्छतीति विहितं दण्डदानं न प्रतिपत्तिकर्म किन्तु चतुर्थीश्रुत्याऽर्थकर्मेति ग्रन्थो विशदं व्याख्येयः ।०

उ०—कर्मणा करणभूतेन यमभिप्रैति=ईप्सति तत्कारकं सम्प्रदानमित्यर्थकात् कर्मणा यमभिप्रैतीतिसूत्रस्वरसादुद्देश्यश्चतुर्थ्यर्थः । उद्देश्यत्वमेव शेषित्वम् । तच्चार्थकर्मप्रयोजकम् । अत एव प्रासनवन्मैत्रावरुणाय दण्डप्रदानमित्यधिकरणे क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति विहितं दण्डदानं किं प्रतिपत्तिकर्म, उत अर्थकर्मेति संदिह्य द्वितीयाश्रुत्या दण्डस्यैवेच्छाविषयत्वावगतेः प्राधान्यात् तस्य च दीक्षितहस्ते धारणेन कृतार्थत्वात् प्रतिपत्तिकर्मैव भवितुमर्हतीति पूर्वपक्षः । तदनन्तरं चतुर्थीश्रुत्या-मैत्रावरुणस्यैवोद्देश्यत्वलक्षणार्थप्रधान्यावगतेः, दण्डी प्रैषानन्वाह, इति प्रैषाऽनुवादेऽवलम्बनाय दण्डस्योपयोक्ष्यमाणत्वाच्च । मैत्रावरुणार्थमिदं दण्डप्रदानमित्यर्थकर्मेति निर्णीतम् । सम्यक् प्रदीयते यस्मै तत्सम्प्रदानमित्यन्वर्थसंज्ञया परस्वत्वोत्पत्त्यवच्छिन्नस्वस्वत्वध्वंसेच्छारूपदाधात्वर्थयोगे चतुर्थीविधानाद्रजकस्य वस्त्रं ददातीत्येव प्रयोग इति केचित्तन्न, खण्डिकोपाध्यायः शिष्याय चपेटां ददातीति भाष्यविरोधेनान्वर्थाश्रयणे प्रमाणाभावादिति । सम्प्रदानं त्रिविधम्, अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम्, प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम्, इति वाक्यपदीयात् । सूर्यायार्घ्यं ददाति, विप्राय गां ददाति, उपाध्यायाय गां ददातीति क्रमेणोदाहरणानीति दिक् ।

प्र०—विभक्तीनां धर्मिवाचकत्वं धर्ममात्रवाचकत्वं वेति निरुच्य

घटं जानातीत्यादौ द्वितीयाया विषयतायां लक्षणेति तार्किकोक्त कोलाहलो निरस्यताम् ।

उ०—सुपां कर्मादयोऽप्यर्था इत्यादिभाष्यात् कर्मणि द्वितीयेत्यादिसूत्र स्वरसात् पक्वस्तण्डुलः, प्राप्तोदको ग्रामः, इत्यादावभेदाऽन्वयदर्शनाच्च विभक्तीनां धर्मिवाचकत्वम् । अतएव प्रकृतिप्रत्ययार्थयोरभेदः संसर्ग इत्येकः पक्षः । प्रकृत्यैवाश्रयस्यापि लाभेनानन्यलभ्यो हि शब्दार्थ इति न्यायात् सप्तमीपञ्चम्यौ कारकमध्ये इति सूत्रे शक्तिः कारकमिति भाष्याच्च विभक्तीनां धर्ममात्रवाचकत्वम् । अत एवाऽऽकृत्यधिकरणमपि संगच्छते इत्यपरः पक्ष इति । घटं जानातीत्यत्र द्वितीयाया विषयतायां लक्षणेति नैयायिकमतमयुक्तम् , सुपां कर्मादयोऽप्यर्था इति भाष्यविरोधात् । स्वौजसमौडिति सामान्यसूत्रेण सिद्धे कारकप्रकरणं नियमार्थम् । कर्मण्येव द्वितीयेति प्रत्ययनियमः, कर्मणि द्वितीयैवेत्यर्थनियमश्चेत्यादि । तथाचोभयविधनियमविरुद्धं लक्षणादिकमसाधुत्वप्रयोजकम् । अत एव विभक्तौ न लक्षणेति वृद्धनैयायिकोक्तिः संगच्छते । एवञ्च व्याकरणविरोधेन वृद्धनैयायिकोक्तिविरोधेन च नव्यतार्किकमतमनादरणीयमिति दिक् ।

प्र०—एकं द्विकं त्रिकं चाऽथ चतुष्कं पञ्चकं तथेति कारिकाशयो विशदं व्याख्येयः ।

उ०—आकृतिं वाजप्यायन इति सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात् सिद्धमित्यादिभाष्यात् , जात्याख्यायामेकस्मिन्निति सूत्रस्वरसाच्च जातिरेव वाच्या, व्यक्तीनां नानात्वेन तावतीषु शक्तिकल्पने गौरवात् । नच प्रत्येकं व्यक्तीनामप्येकत्वात्तत्र शक्तिस्वीकारे न गौरवमिति वाच्यम्, एकस्यामेव व्यक्तौ शक्तिस्वीकारे व्यक्त्यन्तरबोधाय लक्षणायां स्वसमवेताश्रयत्वस्य संसर्गत्वे गौरवात् । जातिवादिमते व्यक्तिबोधाय लक्षणायामाश्रयत्वमेव संसर्ग इति लाघवम् । नच गोत्वादिजात्यनुगतीकृतयावद्व्यक्तिषु शक्तिस्वीकारान्न

दोष इति वाच्यम्, नागृहीतविशेषणा बुद्धिर्विशेष्यमधिगच्छतीति न्यायाद्विशिष्टवाच्यत्वमपेक्ष्य जातेरेव वाच्यत्वौचित्यात् । व्यक्तिबोधो निरूढलक्षणया । तत्र च विभक्त्यर्थान्वय इति । अथवा सरूपसूत्रारम्भादणुदित्सूत्रेऽणग्रहणाच्च व्यक्तिरेव पदार्थः, शक्तिग्राहकशिरोमणिना व्यवहारेण व्यक्तावेव शक्तिग्रहात् । सम्बन्धिताऽवच्छेदकजात्यनुगतीकृतनानाव्यक्तिष्वेकधर्मावच्छिन्नाया एकस्या एव शक्तेरुपगमान्न व्यक्तिप्रयुक्तशक्त्यानन्त्यगौरवम् । नच घटत्वादेर्घटनिष्ठशक्यतावच्छेदकत्वस्वीकारे नागृहीतविशेषणन्यायाद् घटत्वाद्येव वाच्यमस्त्विति वाच्यम्, दण्डत्वादीनामन्यथाऽसिद्धत्वेनाकारणत्वेऽपि कारणताऽवच्छेदकत्ववत्तीरत्वादीनां प्रवाहाद्यसम्बन्धितयाऽलक्ष्यत्वेऽपि लक्ष्यतावच्छेदकत्ववदशक्यस्यापि घटत्वादेः शक्यतावच्छेदकत्वसंभवात् । तदुक्तं वाक्यपदीये—आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्, शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यतीति दिक् । द्विकमिति । वस्तुतस्तु नह्याकृतिपदार्थस्य द्रव्यं न पदार्थ इति भाष्यात् जातिविशिष्टा व्यक्तिर्व्यक्तिविशिष्टा जातिर्वा पदार्थः । नचैकमिति पक्षस्य निरालम्बनतापत्तिरिति वाच्यम्. बोधकत्वज्ञानविषयबोधांऽशे प्रकारितयाऽवच्छेदिकाया जातेरैक्यात्तत्पक्षोपपत्तेरिति । नच घटपदं घटविषयकबोधजनकमित्याकारकशक्तिज्ञानात् स्वरूपतो घटत्वप्रकारकविशिष्टबुद्धेरिव जातित्वेन घटत्वविशिष्टबुद्धेरप्यापत्तिरिति वाच्यम्, घटत्वप्रकारकविशिष्टबोधं प्रति घटत्वांशेऽन्याप्रकारकघटत्वशक्तिज्ञानत्वेन हेतुत्वकल्पनात् प्रकृते घटत्वांशे जातित्वप्रकारकत्वेनादोष इति भावः ।

प्र०—पुंस्त्वादीनां स्वरूपप्रदर्शनपुरस्सरं तेषां शब्दगतत्वमर्थगतत्वं वेति प्रतिपादनीयम् ।

उ०—स्वमोर्नपुंसकात्तस्माच्छसो नः पुंसीत्यादिसूत्रस्वरसात् पुंल्लिङ्गः शब्द इति व्यवहाराच्च लिङ्गं तत्तच्छब्दनिष्ठं तत्तच्छब्दवाच्यञ्च । स्तनकेशवती नारी लोमशः पुरुषः स्मृत इत्यादिलौकिकलिङ्गस्याचेतने खट्वावृक्षादौ बाधात्

सत्त्वरजस्तमोगुणानामाविर्भावः पुंस्त्वम्, तिरोभावः स्त्रीत्वम्, स्थितिरन्तराऽवस्था नपुंसकत्वमिति शास्त्रीयलिङ्गमेव शब्दवाच्यम्। नच लिङ्गस्योक्तरूपत्वे तेषां परस्परविरुद्धानामेकत्राऽवस्थानाऽसम्भवेनानेकलिङ्गकोऽशब्द इति व्यवहारानुपपत्तिरिति वाच्यम्, समानाऽनुपूर्वीकत्वेन शब्दानामभेदारोपात्तदुपपत्तेः। अत एव पदार्थपदे पुंस्त्वमेव, व्यक्तिपदे स्त्रीत्वमेव, वस्तुपदे नपुंसकत्वमेवेति सर्वत्राऽयं पदार्थः, इयं व्यक्तिः, इदं वस्तु, इति व्यवहारः। नच शब्दनिष्ठलिङ्गस्य व्यवहारोपयोगित्वे तस्य स्त्रीवाचकपशुशब्देऽपि सत्त्वात् पशुना यजेतेत्यत्र पशुस्त्रीकरणकयागादप्यदृष्टसिद्धिरिति वाच्यम्, लिङ्गविशेषविशिष्टस्यैवार्थविशेषवाचकतया, लिङ्गाऽनुशासनशास्त्रसिद्धतया पशुनेत्यत्राऽस्त्रीविहितनाभावदर्शनेन च पुम्पशोरेव ग्रहणात्। पश्वाऽनतायु गुहा चरन्तं, पश्वे नृभ्यो यथा गवे, इत्यादिवेदे पशुशब्दस्य स्त्रीलिङ्गत्वस्यापि दर्शनेन न तस्य व्यक्त्यादिशब्दसाम्यमिति। वस्तुतस्तु विशेषविध्यभावे उप्रत्ययान्तानां पुंस्त्वस्य व्याकरणेन निर्णीतत्वाद् पश्वाऽनतायुमित्यादौ जसादिषु छन्दसि वा वचनमिति नाभावाऽभावात् व्यक्त्यादिशब्दोक्तलिङ्गस्येव पशुशब्दोक्तलिङ्गस्यापि स्त्रीपुंसादिसाधारण्यादुक्तापत्तिस्तदवस्थेति वाच्यम्। अग्नीषोमीयं पशुमालभेतेत्यत्र पशुशब्देन नाश्वादिर्गृह्यते किन्तु अज एव, छागस्य वपाया इति मन्त्रे छागपदोपादानादेवं छागस्येति स्त्रियामसम्भवेन पुम्पशोर्ग्रहणादिति दिक्।

प्र०—शब्दस्य प्रातिपदिकार्थत्वसाधिका युक्तय उपपादनीयाः।

उ०—ननु घटमानयेत्यादिशाब्दबोधे घटादिशब्दस्य भाने प्रमाणाऽभावात्तस्य प्रातिपदिकार्थत्वानुपपत्तिरिति चेन्न। न सोऽस्ति प्रत्ययो लोके यः शब्दाऽनुगमादृते, अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते। इति वाक्यपदीयात् विष्णुमुच्चारयेत्यादावर्थोच्चारणाऽसम्भवेन विना शब्दविषयं शाब्दबोधाऽसंगत्या च शब्दस्याऽपि प्रातिपदिकार्थत्वसिद्धेः। नच स्ववाच्यवाचकत्वसम्बन्धरूपलक्षणया नोक्तापत्तिरिति वाच्यम्, निरूढलक्षणाया शक्तितुल्यत्वात्। जबगडदशमुच्चारयेत्यादौ समुदायस्य कुत्राप्यशक्तत्वाच्छक्या-

ग्रहेण ... यसम्बन्धरूपलक्षणाया असम्भवाच्च। नच तद्घटकवर्णानामेकाक्षरकोशादौ शक्तिप्रतिपादनान्न लक्षणाया अनुपपत्तिरिति वाच्यम्। ज्ञाताया एव वृत्तेः पदार्थोपस्थित्यौपयिकत्वेन प्रकृते तदग्रहादुक्तानुपपत्तेस्तादवस्थ्यात्। गावमुच्चारयेति भाषाशब्दानामनुकरणे साधुत्वस्य सर्वैरेवाभ्युपगमात्तत्र नैयायिकमते शक्त्यभावेन लक्षणाया असम्भवाच्च। किञ्चानुकार्यानुकरणभेदेऽनुकार्यस्य पदानुपस्थितत्वात् तत्सिद्धयेऽनुकार्यनिरूपितशक्तिरनुकरणे स्वीकार्या तदा शब्दोऽपि प्रातिपदिकार्थः। शब्दार्थयोरभेदविवक्षापक्षे श्रोत्रादिभिरुपस्थितत्वादर्थवद्भासते। नच घटपदादाकाशविषयकबोधवारणाय तदर्थविषयकशाब्दबोधम्प्रति तत्पदनिष्ठवृत्तिज्ञानाधीनतद्विषयकोपस्थितेर्हेतुत्वादनुकार्यस्याभेदविवक्षास्थले वृत्तिज्ञानाधीनोपस्थित्यभावात् कथं शाब्दबोधे भानमिति वाच्यम्, निरूपकताश्रयताऽन्यतरसम्बन्धेन वृत्तिमत एव शाब्दबोधविषयत्वकल्पनात्। सम्बन्धस्योभयनिरूप्यत्वेन पदार्थस्येव तद्बोधकत्वेन स्वस्याऽपि ज्ञानसंभवाच्च। तदुक्तं—ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा, तथैव सर्वशब्दानामेते पृथगवस्थिते इत्यादीति दिक्।

प्र०—प्राचीनोक्तसमासविभागं तल्लक्षणञ्च प्रदर्श्य साररीत्या निराक्रियताम्।

उ०—अव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहिभेदात् समासश्चतुर्द्धेति। पूर्वपदार्थप्रधानोऽव्ययीभावः उत्तरपदार्थप्रधानस्तत्पुरुषः, उभयपदार्थप्रधानो द्वन्द्वः, अन्यपदार्थप्रधानो बहुव्रीहिरिति प्राचीनोक्तमयुक्तम्। सहसुपेत्यत्र योगविभागेन सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा सुबन्तेनेति भाष्यव्युत्पादितषड्विधसमासाऽसंग्रहात्, उन्मत्तगङ्गं, सूपप्रति, अर्द्धपिप्पली, द्वित्राः, शशकुशपलाशमित्यादौ परस्परव्यभिचाराच्च। सिद्धान्ते त्वव्ययीभावाऽधिकारपठितत्वमव्ययीभावत्वं, बहुव्रीह्यधिकारपठितत्वं च बहुव्रीहित्वमित्यादीति दिक्।

प्र०—जहत्स्वार्थादिवृत्तिविशेषान् प्रदर्श्य सिद्धान्ते समासादिवृत्तौ भिन्ना शक्तिः सप्रमाणं निरूप्यताम्।

उ०—राजपुरुष इत्यादौ नातिरिक्ता शक्तिः, कल्पकाभावात्। क्लृ राजादिपदादेवार्थोपस्थितिसम्भवे विशिष्टशक्तिकल्पनस्य गौरवपराहतत्वाच्च तथाचाकाङ्क्षादिवशात् क्लृप्तशक्त्यैव विशिष्टार्थबोधः। नच ऋद्ध राजपुरुष इति प्रयोगापत्तिस्स्याद्राज्ञः स्वातन्त्र्येणोपस्थितिसत्त्वादिति वाच्यम्, सविशेषणानां वृत्तिर्नेति नियमेनादोषादिति तार्किकोक्तं न युक्तम्, अवय शक्त्यैव निर्वाहे पङ्कजादिपदे समुदायशक्त्यसिद्ध्यापत्तेः। नच पद्मत्वरूपेण पस्थितये विशिष्टशक्तिरिति वाच्यम्, स्वामित्वेनोपस्थितये चित्रग्वादिपदेऽ तत्सिद्धेः। नच लक्षणया तथोपस्थितिरिति वाच्यम्, पङ्कजपदेऽपि लक्षण तथोपस्थितिसम्भवात्। किञ्च वर्षासु रथकारोऽग्निमादधीतेत्यत्रावयवशक्त्यै श्रुतीनां ब्राह्मणादिविषयतया चारितार्थ्यात् प्रतिलोमजातिविशेषस्याधिकारित्वं प्रकल्प्यापूर्वविद्याऽध्ययनकल्पनमसङ्गतं स्यात्। किञ्च विशेषणलिङ्गसंख्याद्य योगादयस्तेषां सविशेषणानामित्यादिभिः साधने गौरवम्। किञ्च धवखदिरौ गौरथ इत्यादिषु, इतरेतरयोगयुक्ताद्यर्थस्य वाचनिकत्वेऽतिगौरवं स्यात्। अपि च प्राप्तोदको ग्राम इत्यत्र प्राप्तिकर्त्रभिन्नमुदकमिति बोधोत्तरं तत्सम्ब न्धिनि ग्रामे लक्षणायामप्युदककर्तृकप्राप्तिकर्मग्राम इतीष्टबोधानुपपत्तिस्तथा चित्रगुरित्यत्र स्वाम्यादिप्रतीतये पूर्वपदे उत्तरपदे वा लक्षणेति विनिगमका भावाल्लक्षणाया असम्भवेन स्वाम्यादिबोधानुपपत्तिः। नच प्रत्ययानां सन्नि हितपदार्थगतस्वार्थबोधकत्वमिति व्युत्पत्त्यनुरोधाच्चरमपदे एव लक्षणेति वाच्यम्, बहुव्रीह्यसम्भवापत्तेः। अनेकमन्यपदार्थे इति सूत्रेणानेकसुबन्ता नामन्यपदार्थप्रतिपादकत्वेन समासविधानात्। अपि च घटादिपदेऽपि चरमवर्णस्यैव वाचकत्वापत्तिः, पूर्वपूर्ववर्णानां तात्पर्यग्राहकत्वेनोपयोग सम्भवादिति दिक्।

प्र०—समासशक्तिं प्रतिपाद्य युक्त्या मीमांसकानां विमतिस्तथा चेत् तस्य। प्रशान्तौ प्रयतस्व तीव्रं तदीयसिद्धान्तवचःप्रमाणैः।

उ०—राजपुरुष इत्यादौ राजपदादेः सम्बन्धिलक्षणयैव राजसम्बन्ध्य भिन्नः पुरुष इति बोधोपपत्तेर्न समासे विशिष्टशक्तिरत एव राज्ञः पदार्थैक

देशतया ऽर्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेति सिद्धान्तान्न तत्र शोभनादिविशेषणाऽन्वयः । नच निष्कौशाम्बिरित्यादौ क्रान्ताद्यर्थो वाचनिको वाच्य इति गौरवमिति वाच्यम्, निरादीनां द्योतकतया कौशाम्ब्यादिपदस्यैव कौशाम्ब्यवधिकनिष्क्रमणकर्त्राद्यर्थे लक्षणाऽभ्युपगमेनादोषात् । लक्षणया राजसम्बन्धिभिन्नः पुरुष इति बोधेच्छायां समासस्य, राजसम्बन्धवानिति बोधेच्छायाञ्च विग्रहस्येति प्रयोगद्वयसम्भवात् विभाषेति सूत्रमपि न्यायसिद्धमेव । पङ्कजपदप्रतिवन्दी न समुदायशक्तिसाधिका । तत्रावयवशक्तिमजानतामपि बोधोदयात् ।(पङ्कजादिपदेभ्योऽवयवशक्तिग्रहाभावे न लक्षणया विशिष्टार्थप्रत्ययः सम्भवति ।) नच चित्रगुरित्यादौ साक्षात् सम्बन्धाऽन्वयानुरोधाच्चरमपदे लक्षणासम्भवेऽपि प्राप्तोदक इत्यादौ यौगिकानां कर्त्राद्यर्थकतया साक्षात्सम्बन्धाऽविशेषाल्लक्षणाऽनुपपत्तिरिति वाच्यम्, प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्त्यनुरोधात् पूर्वपदस्य यौगिकत्वेन तल्लक्षणाया धातुप्रत्ययतदर्थज्ञानसाध्यतया विलम्बितत्वाच्च चरमपदे एव लक्षणास्वीकारात्, घटादिपदे च विशिष्ट एव शक्तिः विशिष्टस्यैव सङ्केतितत्वात् बोधजनकत्वपर्याप्त्यधिकरणत्वस्य चरमवर्णेऽभावाच्चेति तार्किकमीमांसकादयस्तन्न, समासे शक्त्यभावेन वृत्तिमत्त्वरूपार्थवत्त्वाभावात् प्रातिपदिकसंज्ञाऽनुपपत्तेः । नच समासग्रहणात् प्रातिपदिकसंज्ञा भविष्यतीति वाच्यम्, तस्य नियमार्थत्वात् । समासे शक्त्यभावेन शक्यसम्बन्धरूपलक्षणाया असम्भवेन लाक्षणिकार्थवत्त्वस्याप्यसम्भवात् । नचोभयसूत्रस्थानेऽतिप्प्रातिपदिकमित्येव सूत्रमस्तु, समासग्रहणञ्च नियमार्थमस्तु । तथा च सुप्तिङन्तभिन्नं प्रातिपदिकमित्यर्थात् समासस्यापि संज्ञा भविष्यतीति वाच्यम्, प्रत्येकं वर्णेषु संज्ञावारणायाऽर्थवत्त्वस्याऽऽवश्यकत्वेन समासे दोषस्य तादवस्थ्यात् । किञ्च प्रत्ययानां प्रकृत्यर्थाऽन्वितस्वार्थबोधजनकत्वव्युत्पत्त्यनुरोधात् चित्रगुमानयेत्यादौ कर्मत्वाद्यनन्वयापत्तिः, एकदेशस्य प्रकृतित्वविरहात् । नच समस्यमानपदार्थगतस्वार्थबोधकत्वं समासोत्तरविभक्तेरिति स्वीकारान्न दोष इति वाच्यम् । क्लृप्तव्युत्पत्तित्यागाऽपेक्षया समुदायशक्तिकल्पनस्यैव युक्तत्वात् । किञ्च

कर्मत्वादिसंसर्गेण तण्डुलादेः पाकादावन्वयतात्पर्येण तण्डुलः पचतीति प्रयोगस्य प्रामाण्यापत्तिवारणाय प्रातिपदिकार्थप्रकारकबोधं प्रति विशेष्यता- सम्बन्धेन विभक्तिजन्योपस्थितेर्हेतुत्वान्नीलोत्पलम्, राजपुरुष इत्यादावनन्वयप्रसङ्गः। पुरुषादेरुक्तकार्यकारणभावाऽनाक्रान्तत्वात्। किञ्च राजपुरुष इत्यत्र राजपदस्य तत्सम्बन्धिनि लक्षणास्वीकारे राज्ञः पुरुष इति विवरणविरोधस्स्यात्। सम्बन्धे तत्स्वीकारे राजसम्बन्धरूपः पुरुष इति बोधप्रसङ्गः तस्माद्वृत्तिमात्रेऽतिरिक्ता शक्तिः स्वीकार्या। अत एव वषट्कर्त्तुः प्रथमभक्ष इत्यत्र भक्षमुद्दिश्य न प्राथम्यविधानं युक्तमेकप्रसरताभङ्गापत्तेरग्नये स्विष्टकृते यजतीत्यत्राङ्गमुद्दिश्य त्रित्वविधानं न युक्तमेकप्रसरताभङ्गापत्तेरिति च मीमांसकोक्तं सङ्गच्छते। समुदाये शक्तिस्वीकारादेवाऽरुणाधिकरणारम्भस्य च सङ्गतिरिति दिक्।

प्र०—निषादस्थपत्यधिकरणविरोधमुद्भाव्य विशिष्टशक्तिस्वीकर्त्तृनये तत्समाधानप्रकारः प्रदर्शनीयः।

उ०—ननु पूर्वोक्तयुक्त्या सर्वत्र समासे शक्तिः। अस्तु च राज्ञः पुरुष इति विग्रहस्तथापि निषादस्थपतिं याजयेदित्यत्र किं षष्ठीतत्पुरुषो बहुव्रीहिर्वोत कर्मधारय इति संशये, कर्मधारयेऽपूर्वविद्याध्ययनकल्पनागौरवात् बहुव्रीहौ वाक्यलक्षणायां गौरवाल्लाघवाऽभावात् षष्ठीतत्पुरुष एवेति पूर्वपक्षे, तस्याऽपि पूर्वपदलाक्षणिकतया गौरवात् कर्मधारय एव, विध्यन्यथाऽनुपपत्त्याऽपूर्वविद्याध्ययनकल्पनारूपगौरवस्य फलमुखतयाऽदोषत्वादिति सिद्धान्ताऽसंगतिः, विशिष्टशक्तिपक्षे तत्पुरुषस्वीकारेऽपि गौरवाऽनवकाशादिति चेन्न। तादृशवाक्यजन्यशाब्दबोधाऽव्यवहितप्राक्क्षणवृत्तिशक्तिग्रहनिष्ठान्तरङ्गबहिरङ्गभावचिन्तनप्रयुक्तलाघवमादाय तदुपपत्तेरिति दिक्।

प्र०—नैयायिमकतनिरसनपुरःसरं स्वसिद्धान्तसम्मतं शक्तिस्वरूपं प्रतिपादय।

उ०—इन्द्रियाणां चक्षुरादीनां घटादिषु तदीयचाक्षुषादिकारणता यथाऽनादिरस्ति तथा शब्दानामर्थैः सह तद्बोधकारणताऽनादिरितीन्द्रियाणामित्यादेरर्थस्तथा चानादिभूतं बोधकारणत्वं शक्तिरिति। नन्वाधुनिकदेवदत्तादिपदे तादृशशक्तेरभावान्न बोधकारणत्वमनादिभूतं शक्तिर्नचानादिभूतेति प्रसिद्धिप्रदर्शनमात्रार्थकं नतु तच्छक्तिशरीरे प्रविष्टं बोधकारणत्वमात्रस्य शक्तित्वान्नोक्तापत्तिरिति वाच्यम्, पित्रादिसंकेताज्ञानेऽप्यन्वयबोधप्रसङ्गाल्लाक्षणिकाऽतिव्याप्तेश्चेति संकेतज्ञानमन्तरा बोधानुदयाच्छाब्दबोधं प्रति संकेतज्ञानमपि हेतुर्वाच्यम्। तथाचावश्यकत्वात् संकेत एव शक्तिरस्तु, आधुनिकदेवदत्तादिपदे पित्रादेर्गवादौ चेश्वरस्येति वक्तुं शक्यमिति नैयायिकमतमयुक्तं—सङ्केतस्य स्वरूपतो हेतुत्वेऽगृहीतशक्तिकपदादप्यर्थबोधापत्तिः, सामान्यतो ज्ञातस्य हेतुत्वे प्रमेयत्वादिना तज्ज्ञानेऽपि बोधप्रसङ्गः, संकेतत्वेन सङ्केतज्ञानस्य हेतुत्वे गवादावीश्वरसंकेतस्य सत्त्वेनेश्वरानङ्गीकर्तॄणां तत्तदर्थबोधजनकत्वग्रहवतां बोधेन व्यभिचारः, अर्थधीजनकतावच्छेदकत्वेन संकेतज्ञानस्य गुरुभूतस्य हेतुत्वकल्पनापेक्षया लाघवादर्थधीजनकतात्वेनैव हेतुत्वे वैयाकरणमतसिद्धेः। नचाधुनिकदेवदत्तादौ संकेतज्ञानादेव बोधेनास्य व्यभिचार इति वाच्यम्, इदं पदमेनमर्थं बोधयत्वितीच्छायाः पदे तदर्थबोधकत्वस्य विषयीकरणेनादोषात्। नच नेदं तद्बोधकम्, इति ज्ञानवतोऽपि अस्मात् पदादयमर्थो बुद्धोऽनेनेति परग्रहाधीनतदर्थबोधजनकत्वग्रहेण तद्विषयकशाब्दबोधवारणायेतराविशेषणत्वेन बोधजनकताज्ञानं कारणं वाच्यम्, नेदं तद्धीजनकमिति प्रतिबन्धकसद्भावेन पदे परग्रहं जानतोऽति तद्ग्रहाऽसम्भवादन्यथा भ्रान्तिज्ञस्यापि भ्रान्तत्वापत्तेरिति दिक्।

प्र०—लक्षणावृत्तिस्वीकारे कीदृशं कार्यकारणभावद्वयं कार्यम्, परनये सिद्धान्ते च कथं न तद् इति समुपपाद्य शक्तिघटितकार्यकारणभावेनैव लक्ष्यार्थस्थलेऽपि कथं न निर्वाह इति समाधेयम्॥

उ०—घटादिपदे ऽगृहीतशक्तिकस्य प्रत्यक्षाद्युपस्थितघटादि[illegible]च्छाब्द-बोधवारणाय शाब्दबोधं प्रति शक्तिजन्योपस्थितेर्लक्षणाजन्योपस्थितेश्च हेतुत्वं वाच्यम् । तथाच कार्यकारणभावद्वयकल्पने गौरवम् । किञ्च शक्तिज-न्योपस्थितिं विनापि लक्षणाजन्योपस्थितितः शाब्दबोधादेवं लक्षणाजन्यो-पस्थितिं विनापि शक्तिजन्योपस्थितितः शाब्दबोधाद् व्यभिचारस्तद्वारणाय स्वाव्यवहितोत्तरत्व, स्वसामानाधिकरण्योभयसम्बन्धेन तत्पदनिष्ठशक्तिज्ञाना-धीनोपस्थितिविशिष्टशाब्दबुद्धित्वावच्छिन्नं प्रति तत्पदनिष्ठशक्तिज्ञानाधीनो-पस्थितिः कारणम् । तत्पदनिष्ठलक्षणाज्ञानाधीनोपस्थितिविशिष्टशाब्दबुद्धित्वा-वच्छिन्नं प्रति तत्पदनिष्ठलक्षणाज्ञानाधीनोपस्थितिः कारणं, पदार्थोपस्थिति-प्रत्यपि शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन च हेतुता वाच्या, तत्रापि व्यभिचार-वारणायाव्यवहितोत्तरत्वनिवेशे चातिगौरवं लक्षणास्वीकर्तृनये । यद्यपि लक्षणानङ्गीकर्तृमते इदम्पदमेतदर्थबोधकमिति शक्तिज्ञानेन सामान्यतः कार्यकारणभावकल्पनेऽपि तत्तदर्थभेदेनानन्तकार्यकारणभावकल्पने गौरवम् परस्परव्यभिचारवारणायाव्यवहितोत्तरत्वनिवेशे चापरं गौरवं समानं, तथापि शक्तिभ्रमानुरोधेन तत्तत्पदतत्तदर्थभेदेन पूर्वोक्तगौरवं नैयायिकानामपि । लक्षणाकार्यकारणभावकल्पनागौरवं वैयाकरणानां नेति लाघवम् । नच शाब्द-बोधं प्रति वृत्तिजन्योपस्थितित्वेन हेतुता पदार्थोपस्थितिं प्रति वृत्तिज्ञानत्वेन च कारणतेतिस्वीकारान्न लक्षणावृत्तौ गौरवमिति वाच्यम्, शक्तिलक्षणान्यतर-त्वस्य वृत्तित्वस्य कारणतावच्छेदकत्वे शक्तित्वापेक्षया गुरुत्वात् । नच लक्षणा-ङ्गीकर्तुरपि शक्तिज्ञानत्वेनैव हेतुता, शक्यसम्बन्धरूपलक्षणायां शक्तेरपि प्रवेशान्न गौरवमिति वाच्यम्, तदर्थविषयकोपस्थितिं प्रति तदर्थनिरूपितत-त्पदनिष्ठशक्तिज्ञानत्वेन हेतुताया आवश्यकत्वात् । अन्यथा गङ्गातीरयोः सम्बन्धाग्रहवतोगङ्गापदशक्तिं जानतोऽपि तीरबोधप्रसंगात् । एवञ्च शक्ति-ज्ञानत्वेनैव हेतुत्वस्य वक्तुमशक्यत्वाल्लक्षणावृत्तिस्वीकारे पूर्वोक्तगौरवं दुर्वारमेव । तस्मान्न लक्षणाऽङ्गीकार्या, गङ्गायां घोष इत्यत्र तीरप्रतीतिर-प्रसिद्धशक्त्यैवेति दिक् ।

प्र०—अपभ्रंशानां साक्षात् वाचकत्वं परम्परया वेति सारोक्तरीत्या सप्रमाणं निर्वचनीयम्।

उ०—नन्वपभ्रंशादपि बोधदर्शनाद्बोधजनकताशक्तिस्तत्रापि स्यात्तथाचापभ्रंशानां साधुत्वापत्तिः, शक्तत्वस्यैव साधुत्वादिति चेन्न, ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः, तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशका इत्यादि वाक्यपदीयप्रामाण्यान्न तेषु शक्तिः। साधुस्मरणद्वारा ततो बोधो नतु साक्षादित्यदोषात्। नचापभ्रंशानां साक्षादवाचकत्वे प्रमाणाभाव इति वाच्यम्, तत्तद्देशभेदभिन्नेषु तेषु शक्तिकल्पने गौरवात् संस्कृतवदपभ्रंशानां कोशादौ गणनाभावान्न पर्यायतुल्यतेति नैयायिकमीमांसकादिमतम्। वस्तुतस्तु शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वादपभ्रंशानां साक्षाद्वाचकत्वं नतु साधुस्मरणद्वारा। साधुशब्दमजानतां पामराणामपि बोधोदयात्। नचार्थनिरूपितायाः साधुशब्दनिष्ठायाः शक्तेरपभ्रंशे भ्रमाद्बोध इति वाच्यम्, बोधकत्वस्याऽबाधेन शक्तिग्रहस्याभ्रमत्वात्। ईश्वरेच्छाशक्तिरिति पक्षे सन्मात्रविषयिण्यास्तस्या बाधाभावात्, प्रतीतेर्भ्रमत्वे विषयबाधस्यैव तन्त्रत्वाच्च। अत एव पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु प्रसिद्धिमागता येन तेषां साधुरवाचकः। दैवी वाग् व्यवकीर्णेयमशक्तैरभिधातृभिः, अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्यय इति वाक्यपदीयसंगतिः। किञ्च बोधजनकतावच्छेदकाऽऽनुपूर्व्याः पर्यायेष्विव भाषायामपि सत्त्वात् संस्कृतवन्महाराष्ट्रभाषायाः सर्वत्रैकत्वेन च विनिगमनाविरहात् भाषायामपि शक्तिः। साधूनामेव कोशादौ विभागाभिधानान्न भाषाणां गणनापत्तिः। नच भाषाशब्दस्यापि साधुतापत्तिरिति वाच्यम्, पुण्यजननयोग्यत्वविशिष्टव्याकरणान्वाख्येयत्वं साधुत्वमिति सिद्धान्तात्। द्व्यक्षरं वा नाम कृतं कुर्यादित्यादि भाष्यप्रमाण्यादाधुनिकदेवदत्तादिनाम्नामपि साधुत्वमिति दिक्।

प्र०—सारोक्तदिशा नञर्थो निरूपणीयः।

उ०—आरोपविषयत्वं नञ्द्योत्यम् एतासर्वस्मै इत्यत्रारोपितः सर्वं

इत्यर्थे सर्वशब्दस्य प्राधान्यात् सर्वनामसंज्ञा सिद्धयति। नञो भेदार्थकत्वा
कारेऽतिसर्वे इत्यत्रेव सर्वशब्दस्य प्राधान्याभावात् सर्वनामत्वानुपपत्तिः। न
भेदप्रतियोगिसर्वं इति बोधाभ्युपगमान्नोत्तरपदार्थस्य प्राधान्यहानिरिति वाच्य
घटो नास्तीत्यादौ नञर्थविशेष्यकबोधस्यैवानुभवसिद्धत्वात्। न चाघटः
इत्यत्र घटभिन्नः पट इति बोधो न स्यादिति वाच्यम्, तस्य मानसबोधत्वात्
वस्तुतस्तु घटो नास्ति, अब्राह्मण इत्यादावारोपबोधस्य सर्वानुभवविरुद्धत्वात्
कः पुनरस्य नञर्थो निवृत्तपदार्थक इति नञ्सूत्रस्थमहाभाष्याच्च नञ
ऽभाव एव। स च प्रतियोगिनि विशेषणम्। अत एवासर्वस्मै इत्यत्र भे
विशिष्टः सर्व इत्यर्थे सर्वशब्दस्य प्राधान्यात् सर्वनामता, अनेकमन्यपदा
सेव्यतेऽनेकया सन्नतापाङ्गयेत्यादावेकशब्दार्थप्राधान्यादेकवचनम्, अब्राह्म
इत्यादौ ब्राह्मणशब्दार्थप्राधान्यात्तत्पुरुषत्वम्। अत्वं भवसि, अनहं भवा
त्यादौ युष्मदस्मदर्थप्राधान्यात् पुरुषवचनादिव्यवस्था च सम्पद्यते। अन्य
त्वदभावो मदभावोऽस्तीतिवन्न स्यात्। अथवा प्रतियोगिनिष्ठविशेषणता
रूपितविशेष्यताश्रयो नञर्थः। एतत्तदोरिति सूत्रेण परस्परसाहचर्यादकोः
पर्युदासेन च सर्वनामैतत्तद्भ्यां सोर्हलि लोपो विधीयते। नञ्तत्पुरुष
टकैतत्तदोरुपसर्जनत्वेन सर्वनामत्वाभावादसः शिव इत्यादौ सुलोपाऽप्रा
सूत्रेऽनञ्समासग्रहणेन नञ्समासे गुणीभूतस्यापि सर्वादेः सर्वनाम
भवत्येवेति ज्ञापनादसर्वस्मै इत्याद्युपपत्तिः। अनेकमन्यपदार्थे इत्यादावे
वचनं सुबिति विशेष्यानुरोधात्, सेव्यतेऽनेकयेत्यत्रापि योषयेति विशेष्या
नुरोधादेकवचनमत एव पतन्त्यनेके, इत्यादीनां सङ्गतिः। अत्वं भव
त्यादौ युष्मदस्मद्भिन्ने लक्षणा। नञ् द्योतकः। तथा च भिन्नेन युष्मदर्थे
तिङः सामानाधिकरण्यात् पुरुषव्यवस्थोपपत्तिः। न च नञर्थभेदस्य विशेष्यत्वे
ऽब्राह्मण इत्यत्र ब्राह्मणप्रतियोगिक भेद इत्यर्थे पूर्वपदार्थप्राधान्यात्तत्पुरुषस
मासानुपपत्तिरुत्तरपदार्थप्रधानस्तत्पुरुष इति सिद्धान्तादिति वाच्यम्, तत्पुरु
षाऽधिकारपठितत्वं तत्पुरुषत्वमिति भाष्यसम्मतत्वादिति दिक्।

प्र०—निपातानां वाचकत्वं द्योतकत्वं वेति निरूप्य सिद्धान्तपक्षः प्रदर्शनीयः।

उ०—साक्षात् प्रत्यक्षतुल्ययोरिति कोशस्वरसादुपसर्गातिरिक्तनिपातानां वाचकत्वमुपसर्गाणां द्योतकत्वं, देवाय नम इत्यत्र नमःशब्दान्नमस्कारार्थप्रतीतेश्च। साक्षात् क्रियते इत्यादौ साक्षात्कारो निपातार्थस्तदनुकूलो व्यापार एव धात्वर्थः, स्वस्वयुक्तनिपाताऽन्यतरार्थफलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वमिति स्वीकारात् कर्मणि लकारसिद्धिरिति नैयायिकाः। तन्न, वैषम्ये प्रमाणाऽभावात्। अयं भावः—ईश्वरमनुभवतीत्यादावनुभवादिर्न धात्वर्थो भवतीत्यत्राप्यापत्तेः। नोपसर्गार्थः, अनुगच्छतीत्यत्राऽप्यनुभवादिप्रत्ययापत्तेः। न विशिष्टार्थः, गौरवात्। तथा च लक्षणया विद्यमानत्वादिवाचकस्य धातोरेव तदर्थः, उपसर्गस्तात्पर्यग्राहकः। एवं चैत्रमिव पश्यतीत्यादौ सादृश्यविशिष्टं चैत्रपदलक्ष्यम्, इवशब्दस्तात्पर्यग्राहकः। साक्षात् क्रियते "इत्यादावपि लक्षणया साक्षात्कारादिर्धात्वर्थ एव। अन्यथा कर्मतासंसर्गेण तण्डुलस्य पाकादावन्वयतात्पर्येण तण्डुलः पचतीति प्रयोगस्य प्रामाण्यापत्तिवारणाय नामाऽर्थधात्वर्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्न इति नियमात् साक्षात् क्रियते इत्यादौ धात्वर्थव्यापारेऽनुकूलत्वसम्बन्धेन निपातार्थस्याऽन्वयाऽसम्भवः। किञ्च भूयान् प्रकर्षः कीदृशो निश्चय इतिवद् भूयान् प्र, कीदृशो निरित्यपि स्यात्। अपि च राजा पुरुष इति वाक्याद्राजसम्बन्धिपुरुष इति बोधवारणाय, अभेदातिरिक्तसम्बन्धावच्छिन्नप्रातिपदिकार्थप्रकारकबोधं प्रति विशेष्यतासम्बन्धेन विभक्तिजन्योपस्थितेर्हेतुत्वाच्चैत्रमिव पश्यतीत्यत्रेवार्थसादृश्ये प्रतियोगितासम्बन्धेन चैत्रस्याऽन्वयाऽसम्भवः। पूर्वोक्तनियमस्य निपातातिरिक्तविषयकत्वाङ्गीकारे प्रमाणाभावात्। किञ्च शरैरुस्रैरिवोदीच्यानित्यादावन्वयो न स्यादिवार्थसदृशस्य करणत्वेऽप्युस्रस्य करणत्वाभावात्। नच विशेषणविभक्तेरभेदार्थकत्वस्वीकारान्नोक्तदोष इति वाच्यम्, उस्रसदृशशराणां समानाधिकरणपदोपस्थाप्यतया भेदेना-

ऽन्वयाऽयोगात् । बाधादभेदेनाऽपि न सम्भवः । अब्राह्मण इत्यादौ द्योत्यार्थमादायार्थवत्त्वात्प्रातिपदिकसंज्ञा तत्पुरुषसमासश्चोपपद्यते । वस्तुतस्तु निपातस्याऽनर्थकस्येति वचनादव्ययादाप्सुप इति ज्ञापकाच्च प्रातिपदिकसंज्ञा । तस्माद् युक्तं निपातानां द्योतकत्वम् । अत एव 'चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णय' इत्यादि भर्तृहरिवचनं संगच्छते, इति । वस्तुतस्तु चन्द्र इव मुखमित्यादाविवादिनिपातसत्त्वे सादृश्याद्यर्थप्रतीतेश्चेत्यन्वयव्यतिरेकाभ्यां निपातानां घटादिपदवद्वाचकत्वं युक्तं, बोधकताशक्तेरबाधात् । किञ्चान्वयव्यतिरेकाभ्यां तिङादीनां वाचकत्ववन्निपातानामपि वाचकत्वं युक्तम् । धात्वर्थप्रातिपदिकार्थयोर्भेदेनेति नियमस्य, प्रातिपदिकार्थप्रकारकबोधं प्रति विशेष्यतासम्बन्धेन विभक्तिजन्योपस्थितेः कारणत्वमित्यादिनियमस्य च निपाताऽतिरिक्तविषयकत्वाच्चन्द्र इवेत्यादौ नान्वयानुपपत्तिः । एवञ्चासत्त्वार्थकत्वे सति चादिगणपठितत्वं, शक्तिसम्बन्धेन निपातपदवत्त्वञ्चोपाधिर्वा जातिर्वा निपातत्वं यन्नैयायिकाऽभिमतं तदेव वैयाकरणानामपि किन्तु सामान्यधर्मे प्रमाणानां पक्षपाताद्वाचकत्वं द्योतकत्वं वा निपातत्वाऽवच्छेदेनैव । अत एव–स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वेति वाक्यपदीयं संगच्छते इति दिक् ।

प्र०—प्रातिपदिकप्रकृतिकभावार्थकप्रत्ययानामर्थं निरूप्य मीमांसकमतेऽर्धजरतीयत्वमुपपादनीयम् ।

उ०—समासादौ शक्तिः कल्प्यमाना राजादिसम्बन्धविशिष्टे कल्प्यते । तथाच राजपुरुषत्वमित्यत्र स्वस्वामिभावसम्बन्धः, पक्तृत्वमित्यादौ क्रियाकारकभावसम्बन्धः, आक्षिकत्वमित्यादौ क्रियाकारकभावसम्बन्धः, त्वाद्यर्थः । दामोदरत्वं कृष्णसर्पत्वमित्यादौ जातिरेव त्वाद्यर्थः । तदुक्तं वाक्यपदीये—"कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनाऽन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसम्बन्धेभ्य" इति । दण्डीत्यादौ प्रकृत्यर्थविशिष्टद्रव्यमात्रवाचकता तद्धितस्येति मीमांसकमतमयुक्तम् । घटत्वमित्यादौ भावप्रत्ययस्य सम्बन्धान-

भिधायकत्वेन दण्डित्वमित्यत्रापि सम्बन्धाभिधानं न स्यात्, प्रकृतिजन्यबोधे प्रकारः प्रकृत्यर्थसमवेतो हि तदुत्तरभावप्रत्ययेनाभिधीयते इति सिद्धान्तात्। एवञ्चार्धजरतीयत्वापत्तेः। न च 'यदा स्वसमवेतोऽत्र वाच्यो नास्ति गुणोऽपरः, तदा गत्यन्तराभावात् सम्बन्धो वाच्य आश्रित' इति सिद्धान्तान्नार्धजरतीयत्वमिति वाच्यम्, इनादेः सम्बन्धिवाचकत्वस्वीकारेणेष्टसिद्धेर्गत्यभावाभावात्। अत एव दण्डी पुरुष इत्यत्र सामानाधिकरण्योपपत्तिः। न च भावप्रत्ययस्य क्वचिज्जात्यादिवाचकत्वं, क्वचित् सम्बन्धवाचकत्वमित्यर्धजरतीयत्वं वैयाकरणानामपि समानमेवेति वाच्यम्, 'प्रयोगोपाधिमाश्रित्य प्रकृत्यर्थप्रकारता'-मित्यादिसिद्धान्तेन पक्षद्वयस्यापि प्रतिपादनात्। नच घटत्वमित्यत्र प्रकारत्वात्तदुत्तरभावप्रत्ययेन घटत्वत्वस्यापि वाच्यत्वे गौरवमिति वाच्यम्, तत्तद्व्यक्तिविशिष्टब्रह्मसत्ताया एव घटत्वघटत्वत्वादिरूपत्वात्। तदुक्तं वाक्यपदीये "सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिष्वि"त्यादि। यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलाविति वार्त्तिककारोक्तमपि प्रकृतार्थे विनिगमकम्। यद्वा सर्वे भावाः स्वेनाऽर्थेन भवन्ति स तेषां भाव इति वार्त्तिकोक्तप्रामाण्याच्छब्दोऽपि त्वाद्यर्थः। हरिहरनलादिशब्देभ्यस्तत्तच्छब्दवाच्यः कश्चिदासीदिति शब्दप्रकारकबोधस्य सर्वसम्मतत्वात्। तथाच क्वचिज्जात्यादिः, क्वचित्सम्बन्धः क्वचिच्छब्द एव त्वाद्यर्थ इति दिक्।

प्र०—सारोक्तदिशा देवताप्रत्ययार्थो निरूपणीयः।

उ०—साऽस्यदेवतेति विहितप्रत्ययस्य देवताविशिष्टं देयमर्थः। नचेन्द्रादिपदादेव देवताया लाभसम्भवात्तत्र शक्तिकल्पनमयुक्तमिति वाच्यम्, देवतात्वेन रूपेणोपस्थितये शक्तिकल्पनस्यावश्यकत्वात्। अत एव, आमिक्षां देवतायुक्तां वदत्येवैष तद्धित इत्यादि मीमांसकोक्तं संगच्छते। न च पदार्थः पदार्थेनेति सिद्धान्तात् देवताया एकदेशत्वात् कथं तत्र प्रकृत्यर्थस्यान्वय। इति वाच्यम्, देवतायां प्रदेये च खण्डशः शक्तिस्वीकारेणादोषात्। न च लक्षणया प्रकृत्यैव देवतात्वेन रूपेणोपस्थितिसम्भवात्तत्र

शक्तिकल्पनं विफलमिति वाच्यम्, प्रदेयमात्रे शक्तिस्वीकारेणादोषात्। ननु ऐन्द्रं दधि, इत्यादौ समभिव्याहृतदध्यादिपदादेव द्रव्यस्याऽपि लाभात् प्रदेयेऽपि शक्तिस्वीकारो व्यर्थ इति चेन्न, दध्यादिपदसमभिव्याहाराभावे द्रव्यप्रतीतये शक्तिकल्पनस्यावश्यकत्वादैन्द्रं दधीति सामानाधिकरण्याच्च। तदस्यां प्रहरणमिति विहितणप्रत्ययस्याऽपि प्रहरणविशिष्टा क्रीडा, प्रहरणक्रोडे क्रीडामात्रं वार्थः। न च वृत्तिमात्रेऽतिरिक्तशक्तेः स्वीकारान्नायं विकल्पो युक्त इति वाच्यम्, आरोपितप्रकृतिप्रत्ययार्थमादाय तदुपपत्तेरिति दिक्।

७ अभेदैकत्वसंख्याया वृत्तौ भानमितिस्थितिरिति कारिकाशयो विशदं व्याख्येयः।

उ०—"यथौषधिरसाः सर्वे मधुन्याहितशक्तयः अविभागेन वर्त्तन्ते संख्यां तां तादृशीं विदुः" इत्यादिवाक्यपदीयात् वृत्तावभेदैकत्वसङ्ख्यायां मानं भवति। सङ्ख्यासामान्यमेव वाऽभेदैकत्वम्। "भेदानां वा परित्यागात् संख्यात्मा स तथाविधः" इति वाक्यपदीयात् राजपुरुष इत्यादौ राज्ञो, राज्ञोः, राज्ञां वाऽयमिति विशेषजिज्ञासोपपत्तये सङ्ख्यासामान्ये शक्तिरावश्यकी, विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वात्। तथाच—कपिञ्जलानालभेतेत्यत्र त्रयाणां चतुरादीनां वा आलम्भनमिति संशये प्रथमोपस्थितत्वात्त्रयाणामेवालम्भनं यथा भवति तथा वृत्तौ सङ्ख्यात्वेनैकत्वस्यैव वृत्त्यर्थत्वं, नतु द्वित्वादीनामिति। वस्तुतस्तु तद्धर्मप्रकारेच्छां प्रति तद्धर्मप्रकारकज्ञानस्य हेतुतायाः सुखादिस्थले क्लृप्तत्वात् पूर्वोक्तजिज्ञासैव नानुभवसिद्धा। तथाचाभेदैकत्वमित्यस्यैकत्वत्वाद्यग्राहकालिकसंख्यात्वप्रकारकप्रतीतिगोचर इत्येवार्थः। यत्र गमकं तत्रैव सङ्ख्याविशेषस्य प्रतीतिर्नान्यथेति दिक्।

प्र०—उद्देश्यविधेययोः सङ्ख्याविवक्षाऽविवक्षाविषये किं सिद्धान्तितं सारकृतेति स्पष्टं प्रतिपादय।

उ०—ग्रहं सम्मार्ष्टीत्यत्र सर्वग्रहसम्मार्गाय यथा ग्रहगतैकत्वमविवक्षितमत एव यावन्तो ग्रहाःपात्राणि तेषां सर्वेषां सम्मार्गः सिद्ध्यति तथा व्याकरणे धातोरित्येकत्वस्य विवक्षणात्। अत एव 'उत्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि तदा सर्वविशिष्येत द्वन्द्वोत्पन्नसुवर्थवदि'ति भट्टपादोक्तिरपि सङ्गच्छते। आर्द्धधातुकस्येड्वलादेरित्यत्रोद्देश्याऽर्द्धधातुकविशेषणस्य वलादित्वस्य विवक्षितत्वाच्च। पशुना यजेतेतिवद्विधेयविशेषणं शास्त्रे विवक्षितमेव, तेन सुद्ध्युपास्य इत्यादौ नानन्तयकाराद्यापत्तिः। न चाद्गुण इत्यादौ विधेयगुणगतैकत्वस्य विवक्षयैवोपपत्तौ एकः पूर्वपरयोरिति [illegible]ग्रहण-वैयर्थ्यापत्तिरिति वाच्यम्, स्थानिभेदादादेशभेदवारणाय तस्य चारितार्थ्यात्। न च रदाभ्यामिति सूत्रे विधेयनकारगतैकत्वस्य विवक्षणाद् भिन्न इत्यत्र नकारद्वयलाभो न स्यादिति वाच्यम्, निष्ठा-तस्य नः, पूर्वस्य दकारस्य च नः, इति वाक्यभेदस्वीकारेणादोषात्। एवञ्चोद्देश्यविशेषणं क्वचिद्विवक्षितं क्वचिन्न, विधेयविशेषणं विवक्षितमेवेति दिक्।

प्र०—क्त्वातुमुन्नादेरर्थन्निरूप्य 'प्रधानेतरयोर्यत्रे' त्यादिकारिकोत्थानबीजं प्रदर्शय

उ०—'अव्ययकृतो भावे' इति वार्त्तिकात् प्रकृत्यर्थे भावे क्त्वातुमुन्नादयो भवन्ति। न च क्त्वाप्रत्ययस्य भावार्थकत्वे समानकर्तृकयोः पूर्वकाले इत्यादिसूत्राणां क्त्वाप्रत्यय य पूर्वकालादिरूपार्थकत्वमिति बाधकानां का गतिरिति वाच्यम्, समानकर्तृकयोर्धात्वर्थयोर्मध्ये पूर्वकालसम्बन्धी योऽर्थस्तद्वाचकात् क्त्वेत्यर्थात्। वर्त्तमानत्वादिवत्सूत्रोपात्तानां द्योत्यत्वमेवेत्याशयात्। वस्तुतस्तु भोक्तुं पचति, भुक्त्वा व्रजतीत्यादावेकवाक्यतोपपत्तये भोजनपाकक्रिययोर्विशेष्यविशेषणभाव आवश्यकः। अत एव भुङ्क्ते व्रजतीत्यादौ नैकवाक्यत्वं, विशेष्यविशेषणभावविरहात्। तथाच तयोर्विशेषणविशेष्यभावनिरूपकः संसर्गो जन्यत्वं, सामानाधिकरण्यं, पूर्वोत्तरभावः, व्याप्यत्वञ्चेत्यादिरनेकविधः। अत एव भोक्तुं पचति, भुक्त्वा तृप्त इत्यादिवाक्यात् भोजनजनिका पाकक्रिया, भोजनजन्या तृप्तिरिति बोधः। भुक्त्वा व्रज-

तीत्यादौ भोजनसमानाधिकरणा, तदुत्तरकालिकी व्रजनक्रियेति बोधः। मुखं व्यादाय स्वपिति, अधीत्य तिष्ठतीत्यादौ कालविशेषाऽवच्छिन्नव्याप्य बोधात् व्याप्यत्वम्, सामानाधिकरण्यञ्च संसर्गः। एवञ्च समानकर्तृकत्वादीनां संसर्गमर्यादया लाभाद्वाक्यशक्तिलभ्यत्वाद्वाऽनन्यलभ्य इति नियमेन तेषां वाच्यत्वम्, अत एव स्वशब्देनोपात्तत्वान्नेति भाष्यप्रतीकमादाय पौर्वापर्यकाले द्योत्ये क्त्वादिर्विधीयते इति कैयटोक्तिः सङ्गच्छते। केचित्तु ओदनं पक्त्वाऽहं भोक्ष्ये इत्यत्र क्त्वाप्रत्ययेन कर्तुरनुक्तत्वान्मयेति तृतीयापत्तिवारणाय समानकर्तृकत्वं क्त्वावाच्यमिति। तन्न, पक्त्वौदनं मया भुज्यते इत्यत्रौदनपदाद् द्वितीयावारणाय कर्म्मणोऽपि क्त्वार्थतापत्तेः। समानकर्तृकत्वस्य सूत्रतो वाच्यत्वालाभाच्च। तृतीयापत्तिस्तु न सम्भवति, प्रधानतिङन्तार्थक्रियानिरूपितकर्तृशक्तेराख्यातेनाऽभिधाने गुणीभूताया अपि तद्वदुक्तत्वेनादोषात्। अत एव 'प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथगि'त्यादि वाक्यपदीयं सङ्गच्छते इति दिक्।

प्र०८—अष्टानां स्फोटानां नामानि निर्दिश्य वर्णस्फोटो निरूपणीयः।

उ०—घटपदादाकाशादिविषयकबोधवारणाय तदर्थविषयकबोधम्प्रति तदर्थनिरूपिततत्तत्पदनिष्ठवृत्तिज्ञानाधीनोपस्थितिः कारणमिति कार्यकारणभावो वाच्यः। तथाच प्रत्येकं वर्णानां वृत्त्याश्रयत्वं समुदितानां वा? आद्ये द्वितीयादिवर्णोच्चारणवैयर्थ्यापत्तिः, प्रथमवर्णोच्चारणादेव तदर्थविषयकप्रतीतिसम्भवात्। अन्त्ये, उच्चरितप्रध्वंसित्वेन यौगपद्याऽसम्भवात्। एकस्मृत्युपारूढानां वाचकत्वे सरो रस इत्यत्र प्रतीतिवैलक्षण्यानुपपत्तिः। तस्मात् वृत्त्याश्रयस्य स्फोटस्यैव वाचकत्वम्। तदुक्तं भाष्ये—स्फोटः शब्दः, ध्वनिः शब्दगुण इति। यद्यपि वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदस्फोटः, अखण्डवाक्यस्फोटः, वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोटश्चेत्यष्टौ स्फोटास्तथापि प्रथमोपस्थितत्वाद् वर्णस्फोटो निरूप्यते। पचति राम इत्यादौ

प्रयोगान्तर्गतास्तिविसर्गादयो न वाचकाः। तेषां बहुत्वेन शक्त्यानन्त्यापत्तेः। ऐधाञ्चक्रे ब्रह्मेत्यादावादेशलुगादेरभावरूपस्य बोधकत्वाऽसम्भवाच्च। लः कर्मणीत्याद्यनुशासनादादेशैः स्मृता लादयः स्वादयश्च वाचकाः, लत्वस्य जातिरूपत्वेन शक्ततावच्छेदकत्वौचित्यात्। आदेशानां भिन्नत्वेन परस्परव्यभिचारवारणायाव्यवहितोत्तरत्वघटितकार्यकारणभावे गौरवाच्चेति नैयायिकाः। अत्रोच्यते, साधुशब्दान्तर्गतास्तिब्विसर्गादय एव वाचकाः, नतु तैः स्मृताः स्थानिनः। पचतीत्यादौ लकारमजानतोऽपि जनस्य बोधोदयात्। न च तिङ्क्षु शक्तिभ्रमाद् बोध इति वाच्यम्, विषयबाधस्यैव भ्रमत्वे तन्त्रतया बोधकत्वशक्तेस्तत्राबाधात्। स्थानिनामपि शाकटायनप्रभृतिभिः स्वेच्छया भिन्नानामभ्युपगमात्, सर्वत्र शक्तिस्वीकारे गौरवव्यभिचारयोर्दुर्वारत्वाच्च, किञ्च शक्तिग्राहकशिरोमणिना व्यवहारेण श्रूयमाणतिङादिष्वेव शक्तिर्बोध्यते। अत एव ते वाचकाः। किञ्च लकारस्य वाचकत्वे भू ल् इत्यतो भवनकर्तृबोधवारणाय तादृशबोधे भवतीति समभिव्याहारस्य कारणत्वकल्पनेऽतिगौरवम्। किञ्च तस्यैव वाचकत्वे तिङो भावनावाचकता, शानजादेः कर्तृवाचकतेति स्वसिद्धान्ताऽसङ्गतिः, लकारस्योभयत्रैक्यात्। न च कर्तरि कृदित्यनुशासनात् कृतिर्लकारार्थः, आश्रयः शानजर्थ इति स्वीकारान्नोक्त दोष इति वाच्यम्। स्थान्यर्थेन निराकाङ्क्षतया शानजादौ कर्तरि कृदित्यस्याऽप्रवृत्तेः। न च देवदत्तः पचमान इत्यत्र सामानाधिकरण्यानुरोधात् शानजादेः कर्तृवाचित्वमावश्यकमिति वाच्यम्, पचतितरां मैत्र इत्यत्र तिङोऽपि कर्तृवाचकतापत्तेः। लक्षणया सामानाधिकरण्योपपादने पचमान इत्यत्राऽप्यापत्तेः। एवञ्च प्रयोगान्तर्गता वर्णा वाचका इति वर्णस्फोटस्य वाचकत्वं सिद्धम्। लः कर्मणीत्यनुशासनं कल्पितलकारे बोधकताशक्तिं तिबादिनिष्ठामादाय प्रवृत्तमिति दिक्।

प्र०—'वाक्यस्फोटोऽतिनिष्कर्षे' इत्यत्र प्रतिपादितो वाक्यस्फोटः कीदृशोऽभिप्रेतः, वाक्यार्थस्यापूर्वत्वात्तत्पक्षे शक्तिग्रहः कथमिति सर्वमेतन्निरूप्यताम्।

उ०—सर्वे सर्वपदादेशाः इति सिद्धान्तात् विष्णोऽव, हरेऽवेत्यादौ पदयोः "एङः पदान्तादति" इत्येकादेशे सति प्रत्येकं पदाऽज्ञानेऽपि समुदायशक्तिज्ञानेन वोधोदयात् समुदायेऽप्यावश्यकी शक्तिः। एवञ्च पदैर्यथा पदार्थवोधे पदार्थनिरूपितशक्तिः पदेऽस्ति तथा वाक्यैर्वाक्यार्थवोधे वाक्यार्थनिरूपितशक्तिर्वाक्येष्वङ्गीकर्तव्या। तथाच पदार्थविषयकवोधं प्रति पदार्थनिरूपितपदनिष्ठवोधकताशक्तिज्ञानस्यैव वाक्यार्थविषयकवोधं प्रति पदसमभिव्याहाररूपवाक्यनिष्ठवोधकताशक्तिज्ञानस्यापि हेतुत्वात् सिद्धो वाक्यस्फोटः। एवं घटः कर्मत्वमानयनं कृतिरित्यतो न तादृशव्युत्पत्तिरहितस्य वोधः। न च शाब्दवोधहेत्वर्थोपस्थितिजनकत्वरूपशक्तित्वस्य वाक्येऽसत्त्वात् कथं तत्र शक्तिरिति वाच्यम्, अर्थोपस्थापकज्ञानविषयशब्दनिष्ठज्ञानकारणत्वस्यैव शक्तित्वात्। न च वाक्यार्थस्य शाब्दवोधात् प्रागनुपस्थितत्वात् कथं तत्र शक्तिग्रह इति वाच्यम्, पदानामेवाऽन्वितपदार्थे शक्तिरितिवदुपपत्तेः। वस्तुतस्तु वृद्धव्यवहारं पश्यतो वालकस्य समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं शक्तिग्रहः। पश्चादावापोद्वापाभ्यां प्रत्येकं शक्तिग्रह इति नोक्तदोषः। नचाशुविनाशिनां क्रमिकाणां मेलनाऽसम्भवादन्तिमवर्णोत्पत्तिकाले, तदभिव्यक्तिकाले वा पूर्वपूर्ववर्णानां तावदभिव्यक्तानां वाऽवस्थानाऽसम्भवेन तत्समूहरूपपदस्य वाक्यस्य वा ज्ञानाऽसम्भव इति वाच्यम्, उत्तरवर्णप्रत्यक्षसमये तस्मिन्नव्यवहितोत्तरत्वसम्बन्धेनोपस्थितपूर्ववर्णवत्त्वस्य तथा तदुत्तरप्रत्यक्षकाले उपस्थितिविशिष्टतद्वर्णवत्त्वस्य च तस्मिन् सुग्रहत्वात्। तथा चानुपूर्वीघटितपदत्वस्यैव वाक्यत्वस्याऽपि ज्ञानसम्भव इति दिक्।

उ०—अखण्डस्फोटसाधिकां युक्तिं प्रदर्श्य पदे वाक्ये चाखण्डत्वं किमिति प्रतिपादय।

उ०—पदवाक्ययोरखण्डत्वञ्चाविद्यमानावयवकत्वम्। अयं भावः—एकारौकारलकारऋकारादिवर्णेष्ववयवाः प्रतीयमाना अपि यथा न सन्ति तथा पदे

पचतीत्यादौ वर्णाः, वाक्ये देवदत्तः पचतीत्यादौ पदानि च न सन्ति । पदं वाक्यञ्चाखण्डमेव । न तु वर्णसमूहः पदम्, पदसमूहो वा वाक्यम् । अनन्तवर्णपदादिकल्पने गौरवात् । न च ककारो गकार इत्यादिप्रतीतिरेव वर्णकल्पने मानमिति वाच्यम्, तत्तद्वर्णोत्पादकत्वेनाभिव्यञ्जकत्वेन वा तत्तद्वर्णजनकताया व्यञ्जकताया वाऽवच्छेदकं वैजात्यमादायैव पूर्वोक्तप्रतीतिवैलक्षण्यसम्भवात् । अत एव 'तारत्वादिवायुनिष्ठं वर्णेष्वारोप्यते' इति वाचस्पतिमिश्रोक्तिरपि संगच्छते । नच कण्ठताल्वाद्यभिघातजवायुसंयोगस्यैव वाचकत्वं कुतो नेति वाच्यम्, प्रत्यक्षोपलभ्यमानककारादेरेव वाचकत्वस्य सर्वानुभवसिद्धत्वात् । तथा च पदवाक्ययोर्वर्णसमूहरूपत्वे पूर्वोक्तरीत्या तेषां युगपदवस्थानाऽसम्भवेन वाचकत्वग्रहानुपपत्त्या तदेवेदं पदं, तदेवेदं वाक्यं, सोऽयं गकार इत्यादिप्रतीत्या च स्फोटोऽखण्डः सिद्ध्यतीति । (नच गकारादिवर्णस्य नित्यस्फोटरूपतया नित्यत्वेन तद्ध्वंसाऽधिकरणक्षणाऽनुत्पत्तिकत्वविशिष्टतदधिकरणक्षणोत्पत्तिकत्वरूप.ऽव्यवहितोत्तरत्वासम्भवात् कथमुक्तप्रकारसम्भव इति वाच्यम्,) स्वज्ञानाधिकरणक्षणोत्पत्तिकज्ञानविषयत्वरूपाव्यवहितोत्तरत्वस्वीकारेणोक्तप्रकारसम्भवादिति दिक् ।)

वर्णानां प्रत्येकं वाचकत्वे प्रत्येकादर्थबोधापत्तिः । क्रमवतामाशुतरोत्पन्नानां तथैवाभिव्यक्तानां वा वर्णानां समुदायस्य ज्ञानाऽसम्भवान्न समुदायस्य वाचकत्वं, पूर्वपूर्ववर्णानुभवसंस्कारसहकारेणैकदा समूहालम्बनरूपसकलज्ञानस्वीकारे तु सरो रस इत्यादौ प्रतीतिवैलक्षण्यानुपपत्तिः । तस्मात् स्फोट एवाखण्डो नादाभिव्यङ्ग्यो वाचक इति स्फोटसाधिका कैयटप्रक्रिया न युक्ता, पदज्ञानसम्भवत्याव्यवहितोत्तरत्वसम्बन्धेन सम्भवात् । प्रत्येकं वर्णानां व्यञ्जकत्वं समुदितानां वेत्यादिदोषस्य तदवस्थत्वाच्च । मन्मते तु प्रत्येकमेव संयोगा अभिव्यञ्जकाः, किन्तु केचिद् गत्वेन केचिदौत्वेन, केचिद्विसर्गत्वेनेत्यनेकैः प्रकारैः । अत एव "ओङ्कार एव सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नाना रूपा भवती"ति श्रुतिरपि संगच्छते इति दिक् ।

प्र०—स्फोटस्याखण्डत्वे शास्त्रसार्थक्यं प्रतिपादय ।

उ०—ननु पदस्याखण्डत्वे शास्त्राप्रामाण्यप्रसङ्गः । शास्त्रस्य प्रकृतिप्रत्ययाभ्यां पदव्युत्पादनमात्रार्थत्वादिति चेन्न, पञ्चकोशकल्पनावद्वास्तवप्रकृतिप्रत्ययवाचकत्वव्युत्पादनं वास्तवस्फोटनिष्ठवाचकत्वबोधनायेत्यदोषात् । न च प्रत्यक्षस्य स्फोटस्य श्रवणादितोऽपि बोधसम्भवान्न शास्त्रं तदुपायः इति वाच्यम्, उपायस्योपायान्तरादूषकत्वादिति न्यायेन मन्त्रजन्यं वैलक्षण्यं पुण्यादिरूपमुच्चारणे यथा स्वीक्रियते, तथा व्याकरणाभ्यासजन्यशब्दे वैलक्षण्यं कल्प्यते इत्यदोषात् । साक्षात् परम्परया वा स्वर्गमोक्षादिहेतुत्वं तज्ज्ञानस्य । तदुक्तं वाक्यपदीये—तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितमित्यादि । नच शशशृङ्गादिवदलीकया प्रकृतिप्रत्ययकल्पनया कथं वास्तवस्फोटबोध इति वाच्यम्, रेखागवयादिनिष्ठलाङ्गूलादिवद्बोधसम्भवादिति दिक् ।

७ प्र०—स्फोटात्मकवर्णस्यैकत्वं समर्थ्योदात्तत्वादिकं वर्णनिष्ठं नवेति निरूपणीयम् ।

उ०—ननु स्फोटस्य वर्णानां तद्वृत्तिकत्वादिजातीनाञ्च नित्यतया नष्टः ककारः, उत्पन्नः ककार इत्यादिप्रतीत्यनुपपत्तिः । वायुसंयोगनिष्ठजातेः स्फोटे भानाङ्गीकारे कादिप्रतीतीनां भ्रमत्वापत्तिश्चेति चेन्न, तथाहि स एवाऽयमिति प्रत्यभिज्ञानाद् वर्णस्यैकत्वं नित्यत्वञ्च । न च स एवाऽयं गकार इति प्रतीतिर्गत्वरूपजातिविषयिकेति वाच्यम्, व्यक्त्यंशाभेदस्यापि भासमानस्य बाधकं विना त्यागायोगात् । न चोत्पन्नः ककार इति प्रतीतिरेव व्यक्त्यभेदे बाधिकेति वाच्यम्, प्रागसत्त्वे सति सत्त्वरूपाया उत्पत्तेर्वर्णेष्वनुभवविरुद्धत्वात् । अतएव वर्णमुत्पादयतीति न व्यवहारः, किन्तूच्चारयतीत्येव प्रत्ययः । उच्चरितत्वञ्च ताल्वोष्ठसंयोगादिजन्याभिव्यक्तिविशिष्टत्वम् । किञ्च ध्वनिनिष्ठोत्पत्त्यादेः स्वाश्रयध्वनिव्यङ्ग्यत्वसम्बन्धेन वर्णनिष्ठत्वान्नोक्तप्रतीतिर्वर्णानित्यत्वसाधिका, सोऽयम्पत्र व्यक्त्यभेदांशे तव भ्रमत्ववत् साक्षात् सम्बन्धांशे भ्रमस्य

तुल्यत्वेऽपि, ममातिरिक्तवर्णतत्प्रागभावध्वंसकल्पना नेति लाघवम्। नच ध्वन्युत्पादकशङ्खाद्यभावात् वर्णस्थले ध्वनिसत्त्वे प्रमाणाभाव इति वाच्यम्, जिह्वाभिघातजवायुकण्ठसंयोगादेर्ध्वनिजनकत्वात्तस्य च वर्णोच्चारणस्थलेऽपि सत्त्वादुक्तसम्बन्धविषयकप्रतीतिर्निराबाधा। एवञ्च परस्परविरुद्धानामुदात्तत्वानुदात्तत्वह्रस्वत्वदीर्घत्वादीनां यथा वर्णावृत्तित्वं मीमांसकैः स्वीक्रियते तथाऽखण्डवाक्यस्फोटस्वीकर्त्तृभिरपि वर्णावृत्तित्वमुत्पत्त्यादेरित्यदोषादिति दिक्।

प्र०—सारोक्तरीत्या जातिस्फोटसाधिका युक्तयः प्रदर्शनीयाः।

उ०—वर्णानङ्गीकारसहितस्फोटाङ्गीकारे सोऽयं गकार इतिवद् योऽयं गकारः श्रुतः सोऽयं हकार इति प्रतीत्यापत्तिः, गकारोऽयं न हकार इति प्रतीत्यनुपपत्तिश्च स्फोटस्यैकत्वात्। किञ्च गत्वादिविरुद्धधर्माध्यासमूलकभेदप्रतीत्यर्थं स्फोटे गत्वादिभानाङ्गीकारे तु गत्वमेव गकारोऽस्तु, मीमांसकैर्धर्मधर्मिणोरभेदाऽभ्युपगमात्। स्फोटे गत्वाद्यनभ्युपगमे गादिप्रतीत्यनुपपत्तिः। वायुसंयोगवृत्ति ध्वनिवृत्ति वा गत्वादिवैजात्यमादाय तथा प्रत्ययस्तु वक्तुमशक्यः। प्रतीतेर्विना बाधकं भ्रमत्वायोगात्। तस्मात् स्फोटे सन्त्येव वर्णाः परन्तु न वाचकाः। तत्तद्वर्णभेदभिन्नाऽनन्तशक्तिकल्पने गौरवात्। आकृत्यधिकरणन्यायेन जातेरेव वाच्यत्ववद् वाचकत्वस्याऽपि युक्तत्वात्। नच तादृशजातौ प्रमाणाभाव इति वाच्यम्, इदं हरिपदमित्यनुगतप्रतीत्या हर्युपस्थितित्वावच्छेदेन हरिपदज्ञानत्वेन हेतुत्वात्तदवच्छेदकतया च जातिविशेषस्यावश्यकत्वात्। न च वर्णानुपूर्व्यैव प्रतीत्यवच्छेदकत्वयोर्निर्वाह इति वाच्यम्, घटघटत्वादेरपि संयोगविशेषविशिष्टमृदाकारादिभिश्चान्यथासिद्ध्यापत्तेः। तस्माज्जातिरेव वाचिका तादात्म्येनावच्छेदिका च। नच सरो रस इत्यादौ तयोर्जात्योः सत्त्वादर्थबोधभेदो न स्यादिति वाच्यम्, आनुपूर्वीवैलक्षण्येन वर्णानां तारत्वमन्दत्ववदुपपत्तेः। नन्वेवमपि जातेः प्रत्येकं वर्णेषु सत्त्वात् प्रत्येकादर्थबोधापत्तिरिति चेन्न, पदवाक्यलक्षणायास्तस्याः

जातेर्व्यक्तिव्यवृत्तित्वस्य धर्मिग्राहकमानसिद्धत्वात्। प्रतिपदार्थे ... तेः, ... सत्यासत्यरूपौ तत्र सत्यांशो जातिरसत्या व्यक्तयः। तत्तद्व्यक्तिविशिष्टं ... जातिरिति तात्पर्यम्। तदुक्तं कैयटेन—असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं ... शब्दवाच्यमिति। ब्रह्मतत्त्वमेव शब्दस्वरूपतया भाति, इति च। नतु ब्रह्म... च गोत्वादिजातेरप्यसत्त्वादनित्यत्वम् "आत्मैवेदं सर्वमि"ति श्रुतिवचना... कैयटः कथं संगच्छतामिति चेन्न, जातिरपि, आविद्यको धर्म... एवेत्याशयात्। ... सत्यांशरूपं शुद्धं शब्दतत्त्वमेव ब्रह्म। तज्ज्ञानान्... इति दिक्।

इति भागलपुरमण्डलमध्यवर्त्ति-'सिमरा'ग्रामनिवासि-कामाख्याविद्यालय-प्रधानाध्यापक-श्रीमन्मालिकझाशर्मतनूद्भवशुकदेवझाशर्म-विरचितभूषणसारप्रकाशः परिपूर्णः।

❀ इति शम् ❀

—:o:—

प्रकाशकः—

मास्टर खेलाड़ीलाल ऐण्ड सन्स,

संस्कृत बुकडिपो,

कचौड़ीगली, वाराणसी—१

मुद्रकः—मास्टर प्रिण्टिङ्ग वर्क्स, बुलानाला, वाराणसी—१

...ह तथा ...
मारे गये तथा
...ले में घायल हो

नाथना गांव में
के मकान में घुस

# पंजाब में

लिए मौजूद थे।

खाड़कुओं ने अंधाधुंध गोलियां चलानी शुरू

...ड्राईवर ... घटनास्थल पर ही मारे गये। इस गोलीबारी में जस्सी कौर नामक एक महिला भी घायल हो गयी।

पटियाला जिले के पौली साहिब गांव के नजदीक सुरक्षाबलों के साथ हुई मुठभेड़ में एक आतंकवादी रेशम सिंह बालटोहा मारा गया तथा सीमा सुरक्षा बल का एक जवान जख्मी हो गया।

तरनतारन जिले के कालिआला गांव में दो आतंकवादियों ने माधर सिंह के घर में घुसकर उसकी पुत्री बेअंत कौर की गोली मारकर हत्याकर दी।

बटाला जिले के करवलियां गांव में ... आतंकवादियों ने हरपाल सिंह नामक व्यक्ति के घर में घुसकर उसकी पत्नी की गोली मारकर हत्या कर दी।

इसी जिले के एक अन्य घटना में आतंकवादियों ने तारागढ़ गांव में अमरीक सिंह के घर पर हमला बोलकर उसे गोलियों से भून...

# ...ओं का रुख इंका के पक्ष
# ...का भगत का दावा

...। इंका नेता तथा पूर्व ... भगत ने दावा किया है ... राजस्थान में पार्टी की ... मतदाताओं का रुख ... है।

नीतियों के कारण राजीव गांधी की हत्या होने के सन्दर्भ में भाजपा नेताओं के कथन की भर्त्सना की और कहा कि वास्तव में इंका शासन के दौरान श्रीलंका के प्रति भारत की नीति बिल्कुल ठीक थी।

इंका नेता का कहना था कि लालकृष्ण ...


मुजफ्फर नगर
केन्द्रों पर पुनर्मत
मुजफ्फरनगर, १३
मुजफ्फरनगर जिले में बुढ़ान
नगर विधानसभा
पुनर्मतदान १५
स्थिति ठीक नहीं होने
१५ जून को पुनर्म

# बराबर की स्थिति में :

(कुशाल जीना)

अहमदाबाद, १३ जून। पूर्व प्रधान मंत्री राजीव गांधी की हत्या ने गुजरात के राजनीतिक और चुनावी दोनों समीकरण बदल डाले हैं। जो भाजपा २१ मई तक प्रदेश की तमाम २६ लोकसभा सीटों पर छाई हुई थी वहीं भाजपा अब सुरक्षात्मक चुनावी रणनीति अपना रही है।

गुजरात में मंदिर पहले भी महत्वपूर्ण मुद्दा था और अब भी है। मंडल का जादू पहले की तरह अभी भी आंशिक है लेकिन राजीव गांधी की हत्या के बाद से इंका और जनता दल (गुजरात) के नेताओं और कार्यकर्ताओं के बीच सफलता की आस बढ़ी है।

गुजरात में इंका के प्रति लोगों की सहानुभूति इधर अवश्य पैदा हुई है लेकिन यह भी तय है कि यह सहानुभूति सब ... नहीं है। राजीव ... गुजरात से इंका ... वजन काफी बढ़ ... मानना है कि ब ... इंका- जद (गु ... बराबर की स्थि ... कच्छ को छोड़ ... होने हैं। इंका इन ... सीटों पर चुनाव ...

राम के नाम पर बटोरने ...

गुजरात अकेला ऐसा ... जहां भाजपा खुले आम ... परिचय भावी प्रधान मं... जबकि भाजपा के खिला... यह है कि आडवाणी गुज... भी नहीं हैं। उन्होंने ... नागरिकता हासिल की ...

राज्य में भाजपा जहां ... वोटों को एक करने में लग... का सारा ध्यान हर सीट प... के मतदाताओं पर केन्द्रि...

## सैनिक के नाम ...

(ए.प...
कर ...
नाम ...
में कै...
उत्स...